पूर्णप्रज्ञविद्यापीठग्रन्थमालायां चतुर्थं पुष्पम्

श्रीआनन्दतीर्थभगवत्पादाचार्यविरचितः

# गीतातात्पर्यनिर्णयः

श्रीजयतीर्थमुनिविरचितन्यायदीपिकासहितः

तीर्थविरचितभावदीपटिप्पणीसहितश्च



Edited by

AHLADACHAR, VIDWAN, M.A.

*Reader in Sanskrit, Bangalore University*



पूर्णप्रज्ञविद्यापीठम्, बेङ्गळूरु - 28

पूर्णप्रज्ञविद्यापीठग्रन्थमालायां चतुर्थं पुष्पम्

श्रीआनन्दतीर्थभगवत्पादाचार्यविरचितः

# गीतातात्पर्यनिर्णयः

श्रीजयतीर्थमुनिविरचितन्यायदीपिकासहितः

तीर्थविरचितभावदीपटिप्पणीसहितश्च



Edited by

HLADACHAR, VIDWAN, M.A.

*Reader in Sanskrit, Bangalore University*



पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - 28

पूर्णप्रज्ञविद्यापीठग्रन्थमालायां चतुर्थं पुष्पम्

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितः

# गीतातात्पर्यनिर्णयः

श्रीजयतीर्थमुनिविरचितन्यायदीपिकासहितः

श्रीराघवेन्द्रतीर्थविरचितभावदीपटिप्पणीसहितश्च

Edited by

**D. PRAHLADACHAR**, VIDWAN, M.A.

*Reader in Sanskrit, Bangalore University*




पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - 28

GITATATPARYANIRNAYA of Sri Anandatirtha with the Commentary Nyayadipika of Sri Jayatirtha and the sub-commentary Bhavadipa of Sri Raghavendratirtha. Pages : 348

Published by Poornaprajna Vidyapeetha, Bangalore-28

First Edition 1987. Copies 1,000

**Price : Rs. 40/-**

प्रकाशकाः

**पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - 28**

सम्पादकसमितिः

**श्री १०८ श्री विश्वेशतीर्थश्रीपादाः**, श्री पेजावरमठ, उडुपि
पूर्णप्रज्ञविद्यापीठस्य कुलपतिः (अध्यक्षाः)

**प्रो. के. टि. पाण्डुरङ्गि**, उपकुलपतिः (सदस्यः)

**विद्वान् डि. प्रह्लादाचार्यः**, कार्यदर्शी
(अस्य सम्पुटस्य सम्पादकः)

**विद्वान् के. हयवदन पुराणिकः** (सदस्यः)






मुद्रकः
श्री पि. एस्. कृष्णाचार्यः
प्रभात प्रिंटिंग् हौस, बसवनगुडि, बेङ्गलूरु - 4

Copies can be had from
**The Secretary, Poornaprajna Vidyapeetha, Bangalore-28**

# प्रास्ताविकम्

श्रीमदानन्दतीर्थभगवत्पादानां सत्सिद्धान्तस्य शिक्षणं प्रसारं च साधयितुमेव बेङ्गळूरुनगरे पूर्णप्रज्ञविद्यापीठम् प्रवर्तितम् । तदर्थमेव छात्राणां शास्त्रशिक्षणेन साकं तात्विकग्रन्थप्रकाशनकार्यमपि विद्यापीठेन समुपगृहीतम् । प्रदीपः, चन्द्रिका, विद्युत् इति इमे सर्वेऽपि प्रकाशाः एव । परन्तु सरसिजानि विकासयितुं सूर्यकिरणान्येव प्रभवन्ति । एवं विविधज्ञानविज्ञानेषु जाग्रत्स्वपि सज्जनहृदयोल्लासः शास्त्रसूर्यप्रभां विना न शक्याधिगमः । अतः व्याख्योपव्याख्याभिः सह श्रीमदानन्दतीर्थभगवत्पादीयग्रन्थप्रकाशनसाहसार्थं प्रवृत्तेन पूर्णप्रज्ञविद्यापीठेन एतावत्पर्यन्तं उपनिषत्खण्डार्थगीताभाष्यप्रभृतिग्रन्थाः प्रकाशिताः । इदानीं श्रीमज्जयतीर्थगुरुवर्यकृतटीकया श्रीराघवेन्द्रयतिवर्यरचितटिप्पण्या च साकं श्रीमध्वमुनीन्द्रनिर्मितं गीतातात्पर्यमर्पयितुं नितरां सन्तुष्यामः । सूर्यचन्द्रयोः सहकारेणैव लोकः बाह्यपदार्थानवलोकयति । श्रीमदाचार्यकृतं गीताभाष्यं गीतातात्पर्यं च सूर्यचन्द्राविव हार्दमज्ञानान्धकारं दूरीकृत्य आन्तरं सत्तत्वजातमाविष्कारयति इति संवर्णितोऽस्य महिमा प्राचीनैराचार्यैः ।

ग्रन्थस्यास्य सम्पादनकार्ये अस्मत्प्रियशिष्यः विद्वान् डि. प्रह्लादाचार्यः नियुक्त आसीत् । तेन च हस्तलिखितग्रन्थपरिशीलनेन परिश्रमेण सम्पादनं कृतम् । अनया तस्य शास्त्रसेवया वयं परितुष्टाः । भगवतोऽनुग्रहेण सज्जनानां सहकारेण च पूर्णप्रज्ञविद्यापीठोपगृहीतशास्त्रग्रन्थप्रकाशनयोजना यशस्विनी भूयादित्याशास्महे ।

**श्री श्री विश्वेशतीर्थश्रीपादाः**
श्री पेजावरमठः, उडुपि

# PREFACE

We are glad to place in the hands of our readers this fourth publication in the Poornaprajna Vidyapeetha granthamālā series.

This volume contains Gitātātparyanirnaya of Sri Anandatirtha together with the commentary Nyāyadipikā of Sri Jayatirtha and the sub-commentary Bhāvadipa of Sri Raghavendratirtha.

Gitātātparyanirnaya with Sri Jayatirtha's Nyāyadipikā together with the sub-commentary Kiranavali of Tamraparni Srinivasacharya was published in 1905 by Sri T. R. Krishnacharya of Kumbhakonam. However, that book has been out of stock and no copies were available nearly for three decades. Therefore, there has been a great need of publishing Gitātātparyanirnaya again. When we undertook the publication of this book Sri V. Prabhanjana brought to our notice a sub-commentary of Sri Raghavendratirtha viz. Bhāvadipa on Nyāyadipika. We thought it would be helpful to the students and the scholars if this sub-commentary is published. This was not published earlier. Sri Tamraparni's Tippani being large, it was not possible for us to include both.

Vidwan Sri D. Prahladachar, M.A., Reader in Sanskrit, Bangalore University was requested to edit this work consulting the manuscripts and prepare a critical edition. He has taken pains to consult the manuscripts of Gitātātparya, Nyāyadipikā and Bhāvadipa available at our Vidyapeetha library and elsewhere, and has prepared this critical edition.

As stated in the prefaces to our earlier publications, we are anxious to publish all important Dvaita Vedanta works in this series. Our next publication viz. Chandogya Upanishad with Sri Raghavendratirtha's Khandartha will be released soon.

The printing of Seshachandrikā Volume II has commenced. After the completion of Khandarthas of remaining two Upanishads viz. Aitareya and Brihadaranya, we propose to take up Upanishadbhashyas and the commentaries thereon. We are distributing the printing work of our books to three presses now, and we hope to publish at least one volume every year. Our permanent fund has come up to Rs. One lakh now, and the sale position is also quite satisfactory. However, we will welcome interested philanthropists adding to our permanent fund so that we can undertake the publication of large works like Nyayamrita with important commentaries.

Sri Sri Pejawaraswamiji, our Kulapathi, is the guiding spirit behind us. He has blessed this publication with his foreword. We are grateful to him.

Our thanks are due to Sri D. Prahladachar for editing this volume and also supervising the printing.

Our thanks are due to Sri D. S. Krishnachar of Prabha Printing House, for the neat printing and good get up.

We hope this publication will be useful for the scholars and the students of Vedanta.

**K. T. Pandurangi**
*Upakulapathi*
*Poornaprajna Vidyapeetha*

**27–3–1987**
**Bangalore**

# उपोद्घातः

## श्रीमदाचार्यग्रन्थवैशिष्ट्यम्

द्वैतसिद्धान्तप्रतिष्ठापनाचार्यस्य भगवतः आनन्दतीर्थमुनेः अपूर्वं वैशिष्ट्यमिदं तत्प्रणीतग्रन्थपरिचयवतां विदुषां लक्ष्यतामवश्यमेवार्जयति यदयं प्रतनेन केनापि दार्शनिकेन अक्षुण्णवेदान्तवर्त्मचारी महादार्शनिकः स्वसिद्धान्तस्थापनाय प्रवर्तितानां प्रस्थानत्रयव्याख्यानानाम् अपरासां च कृतीनां रचने असाधारणं कौशलं प्राकाशयदिति। प्रस्थानत्रयस्य भाष्यं विधायापि भाष्यलक्षणाभिज्ञः पूर्णप्रज्ञः न तावता पर्यतुष्यत्। पर्यमंस्त च जिज्ञासुसन्देहसन्दोहसमुन्मूलनाय परभाष्यापादितविपर्ययपराकरणाय च ब्रह्मसूत्रादिसारसर्वस्वोद्धरणपराः कृतयोऽस्यावश्यका इति। निरमासीच्च अत एव सूत्रभाष्यमनु 'अनुभाष्यम्', इतिहासप्रस्थानसारपरं 'महाभारततात्पर्यनिर्णयं', पुराणप्रस्थानतत्त्वप्रकाशनपरं 'भागवततात्पर्यनिर्णयं', तथैव गीताभाष्यमनु गीतार्थसारसङ्ग्राहकं 'गीतातात्पर्यनिर्णयं' एवमन्यांश्च ग्रन्थान्।

## गीतातात्पर्यस्य वैशिष्ट्यम्

यथा चानुव्याख्याने ब्रह्मसूत्रभाष्यरचनेन गतार्थतामाशङ्क्य "स्वयं कृतापि तद्व्याख्या क्रियते स्पष्टतार्थतः" इति अनुव्याख्यानप्रणयनस्य सार्थक्यं प्रत्यपीपदत् तथाऽत्रापि 'गीतातात्पर्यमुच्यते' इति प्रतिज्ञयैव गीताभाष्यरचनानन्तरमपि गीतातात्पर्यप्रणयनस्य आवश्यकतां स्वयमेवावोचद्भगवानाचार्यः। यथाऽह श्रीजयमुनिः — 'स्वयमेव गीताभाष्यस्य कृतत्वात् किं पुनरारम्भेणेत्यतः तात्पर्यमित्युक्तम्। व्याख्यातत्वेऽपि गीतायास्तदर्थस्य शिष्याणां बुद्ध्यारोहार्थं शब्दानुकरणाद्यन्तरेण पुनस्तात्पर्यमेवोच्यत इति भावः' इति। सुस्पष्टमिदमेतैर्वाक्यैर्यत् गीताभाष्य एव सङ्क्षेपतः सूचितस्य, तत्र तत्र निक्षिप्य रचितस्य वा, क्वचिच्च भाष्येऽनुक्तस्यैव गीतायास्तात्पर्यस्य स्फुटीकरणं अपव्याख्याननिरासेन स्वोक्तार्थस्य दृढीकरणं च गीतातात्पर्ये क्रियत इति।

उद्देशश्चायं भगवतस्तात्पर्यकृतः सर्वथा सफल इति तु सुव्यक्तमेव अतिरोहितमतीनां विमर्शनशीलानां प्राज्ञानाम् । अथापि कतिपयानां तादृशानां निदर्शनानामत्र प्रदर्शनं सर्वथा नानौचित्यमावहतीति प्रत्ययेन तेषां निरूपणे किञ्चिदिव प्रयत्यते ।

गीताभाष्यस्यादौ 'महाभारतान्तर्गतत्वात् भगवद्गीतायाः तस्य प्रामाण्यादिसिद्धौ तस्या अपि तत् सेत्स्यति' इत्याशयेन महाभारतप्रामाण्यं साधयितुकामेन भगवता महाभारतसंहिता तावत् 'सर्ववेदार्थोपबृंहिता तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्ता च' इति समुपावर्णि । अनन्तरं च गीतेयं 'सर्वभारतार्थसङ्ग्रहात्मिका भारतपारिजातमधुभूता' चेति गीतायाः सर्वशास्त्रसारत्वं समासूचि । गीतातात्पर्ये चारम्भे गीतामवतारयितुकामेन आचार्येण 'स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मस्तद्विरुद्धः सर्वोऽप्यधर्मः भगवदधीनत्वात् सर्वस्येति बोधयति भगवान्नारायणः' इति गीताप्रतिपाद्यः सर्वशास्त्रसारः समग्राहि । गीताप्रतिपाद्यत्वेन अत्र सङ्गृहीताश्च 'स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं, विष्णुभक्तेः सर्वसाधनोत्तमत्वं, ज्ञानिनोऽपि मोक्षस्य भगवदधीनत्वं, सर्वस्माद् भगवतो भेदः, सर्वस्य तदधीनत्वं, भगवतः सर्वगुणपरिपूर्णत्वं, सर्वशास्त्राणां भगवत्परत्वम् इत्यादयः प्रमेयाः गीतायां निरूप्यन्त' इत्येतत् विपुलतया तत्तत्प्रमेयप्रतिपादकगीताश्लोकोदाहरणेन अत्यन्तसमीचीनतया प्रादर्शि । एवमादावेव गीतातात्पर्यस्य गीताभाष्योक्त स्पष्टीकरणपरत्वं समासूचयदाचार्यः ।

गीताया बह्वर्थगर्भितत्वप्रदर्शनमपि तात्पर्यकर्तुरभिप्रेतम् । एतच्च भाष्यानुक्तार्थवर्णनं तत्र तत्र कुर्वता तात्पर्येण स्पष्टमेव । 'नासतो विद्यते भावः' इति श्लोकव्याख्यानमत्र एकं निदर्शनम् । गीताभाष्ये हि असच्छब्दस्य प्रकृतिपरत्वं, सच्छब्दस्य ब्रह्मपरत्वं, 'असतः अभावः' इति पदच्छेदं च स्वीकृत्य न केवलमात्मा नित्यः किन्तु प्रकृतिः ब्रह्म च नित्यमिति आत्मनो नित्यत्वसाधने दृष्टान्तप्रदर्शनपरतया श्लोको व्याख्यातः । गीतातात्पर्ये तु सदसच्छब्दयोः सत्कर्मासत्कर्मपरत्वं भावाभावशब्दयोश्च सुखदुःखपरत्वं सप्रमाणं

प्रदर्श्य, भगवद्द्वेषिहननरूपस्वधर्मस्य सत्कर्मत्वात् सत्कर्मणः सकाशात् दुःखस्य असत्कर्मणश्च सकाशात् सुखस्य चाभावात् बन्धुहननादिरूपाद् युद्धात् परलोके दुःखशङ्कया युद्धत्यागो न कर्तव्य इति मनोज्ञा व्याख्या दर्शिता ।

अपूर्वस्यात्यन्तस्वरसस्य चार्थस्य निरूपणमाचार्यस्य अन्यद्वैशिष्ट्यम् । 'योगे त्विमां शृणु' इति प्रतिज्ञातज्ञानोपायनिरूपणार्थं प्रस्तुतं 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति श्लोकं 'त्रैगुण्याख्यं विषं यापयन्त्यपगमयन्तीति त्रैगुण्यविषया वेदाः । तानाश्रित्य निस्त्रैगुण्यो भव' इति व्याचख्यावाचार्यः । आचार्यस्येयं क्लिष्टकल्पना तस्य व्याख्यानाकौशलमेव संसूचयतीति केचित् । किन्तु—

आश्रित्य वेदांस्तु पुमान् त्रैगुण्यविषहारिणः ।
निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः ॥

इति स्मृतिं स्वव्याख्याने प्रमाणयतः आचार्यस्येयं कल्पना क्लिष्टेति केवलं प्रमाणपरिचयदरिद्राणां प्रतिभायात् । अपि च इममेव श्लोकं गीताभाष्ये 'वेदानां परोक्षार्थत्वात् त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भाति । परोक्षवादी वेदोऽयं इति ह्युक्तम् । अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः ।' इति व्याख्यातुराचार्यस्य अक्लिष्टे व्याख्यानेऽपि शक्तिर्न कुण्ठिता ।

## परमतविमर्शः

गीतातात्पर्यस्यापरोऽयं विशेषः यदाचार्यः ग्रन्थेऽस्मिन् परसिद्धान्तप्रक्रियाः तत्र तत्र विशेषतः कटाक्षयति । 'नासतो विद्यते' इति श्लोकस्य सांख्याभिमतसत्कार्यवादपरत्वं निराकुर्वन् स सत्कार्यवादस्यैवासामञ्जस्यं प्रकटयति । स्थितिकाले सदिति व्यावह्रियमाणमेव पदार्थस्वरूपं उत्पत्तेः प्राङ् नाशोत्तरं च नास्तीति खलु सर्वो लोकः प्रत्येति व्यवहरति च । अतः प्रागसतः जनिर्नेति कथम् ? अपि च यदि प्रागसन्नेव पृथुबुध्नोदराकारादिविशेषः न जायते तर्हि जायत इति वित्तिव्यवहारौ निर्विषयौ प्रसज्येयाताम् । न च अभिव्यक्तिरेव विषय इति वाच्यम् । असतो जन्मनोऽपरिहार्यत्वात् ।

प्रागसत्या एवाभिव्यक्तेर्जननस्याङ्गीकार्यत्वात् । अभिव्यक्तेरप्यभिव्यक्तौ अनवस्थाया दुष्परिहारत्वात् । नन्वेवमसतोऽप्युत्पत्तिसम्भवे अत्यन्तासतः शशविषाणादेरप्युत्पत्तिः स्यादिति चेन्न । असतो जन्मांगीकारेऽपि अत्यन्तासतस्तदनङ्गीकारात् । रूपभेदेन सदसत एव तदङ्गीकारात् । 'मृदेव घटः' इति कार्यकारणयोरभेदानुभवेन कारणस्य च उत्पत्तेः प्राक् सत्त्वेन कार्यस्यापि कारणरूपेण सत्त्वं सिद्धयति । मृत्पिण्डः पृथुबुध्नोदराकारादिमान् नेति कार्यकारणयोः भेदस्याप्यनुभवेन पृथुबुध्नोदराद्याकारेण कार्यस्य प्रागसत्त्वमपि स्वीकर्तव्यम् । एवमनुभवबलेन सदसतो जन्माङ्गीकारेण अत्यन्तासतो न जन्मापत्तिर्युज्यत इति सर्वथा सतो जन्माङ्गीकुर्वतां साङ्ख्यानां वादः सर्वथा अनुपपन्न इति ।

अयं श्लोकः विश्वस्य सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वं प्रतिपादयतीति व्याख्यानमपि असतोऽप्रतीतिं निराकृत्य सदसद्विलक्षणे वस्तुनि प्रमाणाभावमुपपादयता, श्रुत्यादिभिः प्रमाणैः विश्वस्य सत्यतां च साधयता आचार्येण दूषितम् । एवम् 'अन्तवन्तः' इत्यत्र जीवदेहादीश्वरदेहस्यातिशयं प्रतिपादयता मुक्तानामपि देहसद्भावः, मोक्षेऽपि जीवेश्वरभेदः अनेकश्रुतिस्मृत्युदाहरणेन साधु समर्थितः । जीवेशाभेदपरतया भासमानानां च श्रुतीनामभेदपरता प्रत्याख्याता ।

अस्त्ययमाधुनिकानां केषाञ्चिदभिप्रायः यत् प्राचीना भाष्यकाराः सर्वेऽपि स्वाभिप्रायमेव गीताशयत्वेन निरूपयामासुस्तथा परमतनिरसनम् अप्रस्तुतमपि व्यसनितया चक्रुरिति । तदिदमापादनं श्रीमतो मध्वाचार्यस्य विषये परं असाध्विति विमर्शनशीलैः प्राज्ञैरङ्गीकर्तव्यमेव । यतोऽयमाचार्यः गीतातात्पर्यत्वेन स्ववर्णितं किमपि प्रमेयं गीताश्लोकाक्षरानुगुणं न समर्थयते इति न दृश्यते । एतच्च आदावेव गीतातात्पर्यं सङ्क्षेपतः उपवर्ण्य गीताश्लोकैरेवतत्समर्थनेन नितरां स्पष्टमेव । एवमेव परमतनिरसनपूर्वकं स्वमतसमर्थनं यदाचार्येण तत्र तत्र क्रियते नैतदपि काप्यसङ्गतम् । तथाहि—द्वितीयेऽध्याये जीवैश्वरैक्यनिरासः कृतो दृश्यते । न चायमसम्बद्धः । यतो ह्यर्जुनं प्रत्युप-

दिश्यमानेषु प्रमेयेषु अन्यतमं स्वधर्मस्य भगवदाराधनतया आचरणीयत्वम् । जीवेश्वरयोरुभयोरपि नित्यत्वेन ईश्वरस्यातिशयाभावात् किं तदाराधनेनेत्याशङ्कायां ईश्वरस्यातिशयः प्रदर्शितः 'अविनाशि तु' इत्यादिना । ईश्वरस्यात्राभिप्रेतोऽतिशयश्च सर्वथाऽविनाशित्वम् । जीवस्वरूपस्य नित्यत्वेऽपि तद्देहस्य नास्ति नित्यता । एवं च जीवस्य देहहान्याद्यमनित्यत्वमस्ति । ईश्वरस्य तु तदपि नास्ति । तद्देहस्याप्राकृतस्य नाशप्रसक्तेरेवाभावात् । ननु देहो नामानित्य एव । अतो नेश्वरदेहस्य नित्यत्वसम्भव इति शङ्कायां तामेतां शङ्कां स्वयमेव गीताचार्यो निराचकार 'अन्तवन्त इमे देहाः' इत्यत्र इमे इति विशेषणात् । तथा च जीवानामपि न सर्वे देहा अनित्याः । किन्तु प्रत्यक्षतः परिदृश्यमानाः प्राकृता एव देहाः । मुक्त्यवस्थायां जीवस्वरूपभूता देहा नित्या एव । एवं जीवदेहस्यैव नित्यत्वसम्भवे किमु वाच्यमीश्वरदेहस्य नित्यत्वमिति ईश्वरस्यातिशयः अनेकप्रमाणवाक्यान्युदाहृत्य प्रदर्शितः । तानि च प्रमाणानि गौणमोक्षपराणि, मुख्यमुक्तौ जीवेश्वरयोरैक्यात् तथाच ईश्वरस्यातिशयासम्भव इति प्राप्ते मुक्तावपि जीवेश्वरयोः भेदसमर्थनमावश्यकमापतितम् । जीवेशाभेदप्रतिपादकश्रुतिभिर्विरोधेन जीवेशभेदस्य मिथ्यात्वे च शङ्किते, तासां—'यत्र त्वस्य सर्वमात्मैवाभूत्', 'यद्वै तन्न पश्यति, 'न हि द्रष्टुः दृष्टेः विपरिलोपो विद्यते, अविनाशित्वात्', 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्', 'परमं ब्रह्म वेद ब्रह्मैव भवति', 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादीनां श्रुतीनां भेदाविरोधेन व्याख्याया एव साधुता संप्रदर्शिता ।

## गीतोक्तसंन्यासस्वरूपम्

गीतायां विदुषामपि भ्रामिका उक्तयो विपुलाः । तत्र ज्ञानिनां कर्मसंन्यासोक्तिपरा उक्तयोप्यऽन्तर्भवन्ति । इतरैश्च कर्मसंन्यासो नाम सर्वथा कर्मत्याग एवेत्यभिप्रेतम् । तन्मतस्य गीतानाभिमतत्वप्रदर्शनपुरःसरं गीताभावः आचार्येण हृदयङ्गमं प्रकटितः । नात्र कर्मसंन्यासः सर्वथा कर्मत्यागो भवितुमर्हति । गीतायामेव तदसम्भावितत्वस्य स्पष्टमुक्तेः । किन्तु कर्मणो

ब्रह्मण्याधानपूर्वकं निष्कामकर्मकरणम् । कर्मणां ब्रह्मण्याधानमपि न कर्मा-करणम् । 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।' इति कर्मकरणस्याप्युक्तत्वेन व्याघातप्रसङ्गात् । अपि तु मम कर्माणि तत्पूजात्मकानि तेनैव मम शुभार्थं कृतानि इति अनुसंधानम् । नचैवं कर्मणां भगवत्कृतत्वे जीवस्य अकर्तृत्वप्रसङ्गः । तथाच 'करोति' इति पुनर्व्याहतिर्भवेदेवेति वाच्यम् ।

## जीवकर्तृत्वविचारः

अस्त्येव जीवस्य वस्तुतः अकर्तृत्वम् । परन्तु तन्न सर्वथा कर्तृत्वाभावः यतो हि नात्र अकर्तृत्वं सर्वथा कर्तृत्वाभावः । किन्तु स्वतन्त्रकर्तृत्वाभावः । भगवदधीनकर्तृत्वं तु अस्त्येव । पित्रा कारितं स्ववन्दनं यथा । शिशुकर्तृक-मेवोच्यते तथा भगवता कारितमपि कर्म जीवकर्तृकमुच्यत इत्येव तात्पर्यम् ।

नन्वेवं तर्हि उत्तरत्र 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥' इति जीवस्य कर्तृत्वसामान्यनिषेधः कथमिति सन्देहे लोकदृष्टान्तेन गीताभावः आचार्यैर्मनोज्ञं निरूपितः — नायं श्लोकः सर्वथा जीवस्य कर्तृत्वनिषेधपरः । किन्तु राजपुत्राणां स्वपित्रा दत्तं पालकत्वं यथाऽस्ति तथैव परमात्मदत्तं क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं, क्रिया-निष्पन्नधर्मादिरूपकर्मणि स्वातन्त्र्यं चास्तीति शङ्कायां तन्निषेधार्थमेवायं श्लोक आगतः । जीवस्य हि कर्तृत्वं परतन्त्रमेव, न सर्वथा स्वतन्त्रम् । जनपदे निवसतां तद्वित्तभोजिनामपि आधिपत्यादाने 'न दत्ता राज्ञा जनपदाः स्वपुत्राणाम्' इति प्रयोगो यथा तथैव 'कर्मफलादिसंयोगिनामपि जीवानां स्वातन्त्र्यादानात् कर्तृत्वं न सृजति' इति युक्तम् एवेति ।

'स्वभावस्तु प्रवर्तते' इत्ययमपि भागः जीवस्येश्वरस्य च कर्तृत्वाभावपर इति आपाततो भाति । परन्तु आचार्यस्यात्र व्याख्या काचिदपूर्वैव — नात्र स्वभावपदेन प्रसिद्धवस्तु स्वभावः कथ्यते । अपि तु भगवान् स्वभावशब्दार्थः । स्वयमेव भवति भावयति इति व्युत्पत्तेः । 'स्वातन्त्र्याद् भगवान् विष्णुः

स्वभाव इति कीर्त्यते' इति स्मृतेश्च । नचेयं क्लिष्टा कल्पना । 'कर्मसंन्यासात् कर्मयोगो विशिष्यते' इति कर्मयोगं प्रशस्य, 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' इति कर्मणोऽनिवार्यतां च प्रतिपाद्य सपदि 'न कर्तृत्वं न कर्माणि' इत्यादिना 'स्वभावस्तु प्रवर्तते' इत्यनेन च जीवस्येश्वरस्य च सर्वथा कर्तृत्वनिषेधे गीतोपदेशकस्य व्याहतेरपरिहार्यत्वात् । अपि च भगवतः स्वाभाविकं कर्तृत्वं प्रतिपादयन्त्यः नैकाः श्रुतयः स्मृतयश्च भगवतः कर्तृत्वस्यैवाभावे विरुद्धाः स्युरित्यतोऽपि भगवतः स्वतन्त्रं स्वाभाविकं च कर्तृत्वं, जीवस्य तु परतन्त्रं कर्तृत्वं च श्रीकृष्णः अत्राभिप्रैतीति सुष्टु साधयाञ्चकार श्रीमदाचार्यः ।

## गीतायां न कुत्रापि पुनरुक्तिः

गीतायां तत्र तत्रोक्तस्यैव पुनरुक्तिरस्तीत्याभाति । केचित् पुनरुक्तेः तावद्दोषत्वं नास्तीत्यभिमानेन वा पुनरुक्तिमेवालक्षयन्तो वा तत्परिहारे नैव प्रयतन्ते । श्रीमदाचार्यस्य इदमपरं व्याख्यानकौशलं यदस्मिन् सर्वशास्त्रोत्तमत्वेन प्रथिते गीताशास्त्रे न केवलं पुनरुक्तेरवकाशो यथा न स्यात्तथा व्याख्यायते अपि तु पुनरुक्तिवदाभासमाना भागाः वस्तुतः अतिमहत्त्वपूर्णप्रमेयाणां प्रतिपादका इति च प्रदर्श्यन्ते । तत्रैकं निदर्शनं, त्रयोदशेऽध्याये 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्' इति श्लोकः । पूर्वस्मिन् श्लोके 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥' इत्यत्र 'कार्यकारणकर्तृत्वे' इत्यनेनोक्तशरीरेन्द्रियसंबन्धात्मककार्यकारणसम्बन्धस्यैव उत्तरश्लोकस्थप्रकृतिस्थपदेनोक्तेः, 'पुरुषः सुखदुःखानां' इत्यादिनोक्तस्य सुखादिभोगस्यैव च 'भुङ्क्ते प्रकृतिजान् गुणान्' इत्यनेनोक्तेः पुनरुक्तिः स्पष्टं प्रतीयते । अत्रापरिहार्यामिव भासमानां पुनरुक्तिं परिहरन्ती तात्पर्योक्तिः—'कार्यकारणसम्बन्धं भोगं च मिथ्येति वदतां निराकरणायाह—पुरुषः प्रकृतिस्थो हि' इति । अस्या अभिप्रायस्तु—नायं श्लोकः कार्यकारणसम्बद्धो जीवः सुखदुःखादिभोक्तेति वक्तुमागतः । येन पौनरुक्त्यप्रसङ्गः । किन्तु कार्यकारणसम्बन्धस्य भोगस्य च मिथ्यात्वं

निराकर्तुमागतः । सति चैवं क्व पुनरुक्तिरिति । ननु निराकरणं प्रमाणोपन्यासमपेक्षते। न चात्र श्लोके कार्यकारणसम्बन्धस्य वा भोगस्य वा मिथ्यात्वनिरासकप्रमाणोपन्यासं पश्यामः । उक्तस्यैव पुनरभिधानमात्रेण कथं वा किमपि निरस्येत इत्यतः पुनस्तात्पर्यवाक्यं प्रवृत्तं 'हीत्यनुभवविरोधं दर्शयति इति । प्रसिद्धिवाचको हिशब्दः कार्यकारणसम्बन्धस्य भोगस्य चानुभवसिद्धत्वं तथा तन्मिथ्यात्ववादस्य अनुभवविरोधं दर्शयतीति नात्र श्लोके कथमपि पुनरुक्तेरवकाश इति ।

## साक्षिप्रमाणम्

अस्मिन्नेवावसरे, भगवता प्रयुक्तस्य हीति शब्दस्य गाम्भीर्यं प्रकटयितुमुद्युक्तेन आचार्येण स्वसिद्धान्ते अप्रतिहततर्कशुद्धिः प्रदर्शिता। साक्ष्यनुभवो नियमेन यथार्थ इति हि तस्य सिद्धान्तः। सुखाद्यनुभवश्च साक्षिरूपः। तस्य च भ्रान्तित्वे साक्षिणो याथार्थ्यनियमो नास्तीति स्यात्। भ्रान्तित्वाभ्रान्तित्वग्रहणशीलस्य साक्षिणोऽपि भ्रान्तित्वे कुत्रापि भ्रान्तित्वमभ्रान्तित्वं वा न सिद्ध्येत्। तदसिद्धौ च तत्सिद्ध्यधीनः सर्वोऽपि व्यवहारः विलुप्येत। आत्मास्तित्वग्राहिणोऽनुभवस्यापि भ्रमत्वशङ्कया आत्माऽपि न सिद्ध्येत्। अपि च सुखदुःखादिविषयं ज्ञानं साक्षिरूपं आत्मस्वरूपम्। तस्य च मिथ्यात्वे नैरात्म्यवाद एवाङ्गीकृतः स्यात्। भ्रमस्य अविद्याकार्यत्वेन सुखादिज्ञानस्य भ्रमत्वे तस्याविद्याकार्यत्वमङ्गीकरणीयम्। तथाच सुखादिज्ञानस्वरूपस्यात्मनोऽप्यविद्याकार्यत्वप्रसङ्गः। नैतत् पुनर्वक्तव्यं यत् एवमादिभिरखण्डयैः निशितैश्च तर्कैः परपक्षान् खण्डयतोऽस्य आचार्यस्य अनुमानतीर्थ इत्याख्या अन्वर्थैवासीदिति ।

## विशेषस्य स्वरूपं प्रकाराश्च

गीतातात्पर्यनिर्णये भगवत्पादैः निरूपितानां विषयाणां प्रस्तावसमये अवश्यमुल्लेखनीयः एको विषयः विशेषः। द्वैतसिद्धान्ते सामान्यपरिचयवतामपि नेदं ज्ञापनीयं यदयं 'विशेषः' आचार्योपज्ञः। प्रकरणेषु, उपनिषद्भाष्येषु,

अनुव्याख्याने च तत्र तत्र अभेदे भेदकार्यकारिणोऽस्य प्रमेयस्य समर्थनं, सर्वैरपि दार्शनिकैरस्य अवश्याङ्गीकर्तव्यत्वनिरूपणं च महता प्रबन्धेन साधु कृतमपि पुनरस्मिन् ग्रन्थे आचार्येणायं विषयः प्रस्तूयते। न चायमपि विषयः स्वीयप्रक्रियानिरूपणचापलेन आचार्येण गीतातात्पर्यनिरूपणपरे ग्रन्थेऽस्मिन् यथाकथञ्चिदायोजितः। विश्वरूपाध्याये 'द्रष्टुमिच्छामि ते रूपं' इत्यर्जुनेन भगवतः यत्किञ्चिद्रूपप्रदर्शने प्रार्थिते 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः, इत्यनन्तानि रूपाणि दर्शितानि। अपश्यच्च तान्यर्जुनः 'पश्यामि त्वां सर्वतोऽनन्तरूपम्' इत्युक्तया रीत्या। एकरूपप्रदर्शने प्रार्थिते अनन्तरूपाणां प्रदर्शनं च एकस्यैवानन्तरूपत्वं, तेषाञ्च रूपाणां परस्परमभेदं च सूचयति। अनन्तानां तेषां रूपाणमभेदे एकत्वमेव स्यात्। अनन्तत्वसङ्ख्या कथं घटत इति शङ्का अत्रावश्यमेव प्रादुर्भवेत्। अवश्यपरिहरणीयाया अस्याः शङ्कायाः परिहारार्थमेव 'विशेष' निरूपणं प्रास्तुवदाचार्यः। अत्र निरूपिताश्च अंशा अपूर्वा एव। अत्रोदाहृतप्रमाणानुसारेण विशेषो द्विविधः। नित्योऽनित्यश्चेति। चेतने तदात्मको विशेषः कश्चिन्नित्यः कश्चिच्च अभिव्यक्त्यपेक्षयाऽनित्यः। 'चेतनवस्तुस्वरूपमस्ति' इत्यत्र चेतनत्ववस्तुत्वस्वरूपत्वास्तित्वविशेषाः नित्यमभिव्यक्ताः नित्याः। 'चेतनः करोति, भुङ्क्ते, गच्छति' इत्यत्र करणं, गमनं, भोजनं चेति विशेषाः कदाचिदभिव्यज्यमानाः अनित्या इति कथ्यन्ते। चेतने नित्या अनित्याश्च विशेषाः विशेषिणा चेतनेनात्यन्ताभिन्नाः। अचेतने तु यावद्द्रव्यभाविनो विशेषाः विशेषिणाऽत्यन्ताभिन्नाः। यथा 'चूतफलमस्ति' इत्यत्र चूतत्वफलत्वादिविशेषाः। अयावद्द्रव्यभावी च विशेषः विशेषिणा भिन्नाभिन्नः। यथा 'पीतं चूतफलम्' इत्यत्र कादाचित्काः पीतत्वादिविशेषाः। अत्रायमंशः स्पष्टीकृतो यच्चेतने विशेषाः विशेषिणा केवलमभिन्ना एव। अचेतने तु भिन्नाभिन्ना अपि विशेषाः संभवन्तीति। ननु चेतनेष्वपि भेदोऽभेदश्चानुभूत इति भेदाभेदावङ्गीकर्तव्याविति चेत्, सत्यम। किन्तु तौ भेदाभेदौ चेतने नैकप्रतियोगिकौ। 'अहं मदभिन्नः, घटादेश्च भिन्न इति भिन्नप्रतियोगिकावेव भेदाभेदौ भवतः। अचेतने तु एकप्रतियोकावपि तौ भवतः। यथा

एकैकतन्तोः पटेन भेदोऽभेदश्च। अत्रास्माभिः विशेषतो लक्षितव्यस्त्वयं विषयः यदाचार्यः ग्रन्थान्तरेषु विशेषं पदार्थस्य सामर्थ्यविशेषं निरूपयामास। अत्र तु पदार्थधर्मानेवेति।

प्रसङ्गवशादस्मिन्नेवावसरे आचार्येण विशिष्टवस्तुनः स्वरूपमपि विचारितम्। अस्त्यत्र विषये दर्शनेषु मतभेदः। अत एवास्य विचारस्य महत्त्वम्। केचित् विशिष्टं विशेष्येणात्यन्ताभिन्नमाहुः। अपरे च अत्यन्तभिन्नम्। गीतातात्पर्ये च आचार्येण विशेष्यविशिष्टयोरभेदः समर्थितः। न च नैयायिकमतप्रवेशः। नापि विशेष्यविशिष्टयोर्भेदसमर्थनपरोपाधिखण्डनमन्दारमञ्जरीविरोधः। विशेष्यविशिष्टयोर्भेदाभेदस्यैव आचार्येणात्राभिप्रेतत्वात्। केवलभेदवादस्यैवात्र निराकरणात्। मन्दारमञ्जर्यां च विशेष्यविशिष्टयोः केवलाभेदनिराकरणस्यैव चिकीर्षितत्वात्। तत्रैवान्ते स्पष्टं भेदस्याप्युक्तेश्च।

## शब्दनिर्णयकोशः

गीतातात्पर्यनिर्णये आचार्यस्यापूर्वव्याख्यानपद्धतिपरिशीलनप्रसङ्गे अस्त्यवश्यमुल्लेखनीयः अपरोंऽशः यदाचार्यः ग्रन्थेऽस्मिन् शब्दनिर्णयाख्यं कोशविशेषं तत्र तत्रोदाहरति। यद्यप्ययं कोशः इदानीमनुपलब्धः। तथाप्यत्यन्तसमुचितहृदयङ्गमव्याख्यानोपयोगिनोऽस्य महत्त्वमसाधारणम्। अत्रैकं निदर्शनं दशमेऽध्याये 'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः' इति श्लोकः। अत्र बुद्धिर्ज्ञानमिति पर्यायशब्दप्रयोग इति भाति। आचार्यश्च शब्दनिर्णयमुदाहृत्य बुद्धिशब्दस्य अन्तःकरणार्थत्वमुपपाद्यापर्यायत्वं साधयति। 'बुद्धिर्बोधनिधित्वात् तदन्तःकरणमुच्यते' इति शब्दनिर्णयः अन्तःकरणस्य बुद्धिशब्दवाच्यत्वे बोधनिधित्वरूपं प्रवृत्तिनिमित्तमप्याह। श्रीमद्विजयतीर्थैरयं स्मृतित्वेनोक्तः। शब्दनिर्णय इति नाम्ना चायं स्मृतिरूपः कोश इति ज्ञायते।

एवमत्यन्तवैशिष्ट्योपेतस्यास्य ग्रन्थस्य टीकानिबन्धनकाराः श्रीमज्जयतीर्थश्रीमच्चरणा ये तावत् प्रायः समेषां श्रीमदाचार्यप्रणीतग्रन्थानां अप्रतिमटीका-

रचनेन टीकाकृत्पादा इत्येवमन्वर्थनाम्ना भूषिता भुवि प्रथिताश्च महानुभावाः। सैषा टीका न्यायदीपिकाख्या गीतोपदेष्टुः हार्दं समर्थयमानानां श्रीमदाचार्योपनिबद्धानां न्यायानां संप्रकाशनेन अन्वर्थनाम्नी। विना चैतां गीतातात्पर्यनिर्णयावगाहनं दुःशकमेवेति तु सर्वथा नातिशयोक्तिः।

अस्याश्च टीकाया द्वे टिप्पण्यौ प्रसिद्धे। एका श्रीमज्जयतीर्थीयानां, प्रायः सर्वासां टीकानां टिप्पणीरचयितृभिः टिप्पणीकारेष्वग्रगण्यैः प्रातःस्मरणीयैः श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणैः विरचिता भावदीपाख्या। अपरा च ताम्रपर्णीवशविभूषणैः श्रीश्रीनिवासाचार्यैर्विरचिता किरणावल्याख्या। अनयोः भावदीपो यद्यप्यतिसंक्षिप्तस्तथापि विषमस्थलेषु न्यायदीपिकाभावं प्रस्फोरयन् टीकावाक्ययोजनादिकं च कुर्वन् अत्यन्तमुपकारकः। किरणावली तु किञ्चिद्विस्तरेण टीकावाक्यविवरणादिकं कुर्वन्ती अध्येतॄणां साहाय्यकारिणी।

किरणावलीसहितन्यायदीपिकायुतगीतातात्पर्यप्रकाशनं एतच्छतकस्य आदिमे दशके द्वैतसिद्धान्तग्रन्थप्रकाशनधुरन्धरेण श्रीमता टि. आर्. कृष्णाचार्येण विहितमपि एतद्ग्रन्थाध्ययनोत्सुकैः नेदानीमुपलभ्यते। एवं भावदीपोऽपि कतिपयवर्षेभ्यः प्राक् धारवाडस्थेन श्रीपञ्चमुखी आनन्दतीर्थाचार्येण प्रकाशितोऽपि विना न्यायदीपिकां प्रकाशितः। अतोऽस्य कदाऽप्यप्रकाशितस्य भावदीपसहितन्यायदीपयुतगीतातात्पर्यस्य प्रकाशनमावश्यकमिति मन्वानैः श्रीपूर्णप्रज्ञविद्यापीठस्य कुलपतिभिः गुरुवर्यैः श्रीपेजावरमठाधीशैः ग्रन्थस्यैतस्य सम्पादनेऽहमादिष्टः। विद्यापीठीयस्य निखिलकार्यजातस्यापि मुख्यतो निर्वाहकेभ्यः, मादृशान् असङ्ख्याकान् शिष्यान् सुतनिर्विशेषं परमप्रेम्णा परिपाल्य अध्यात्मविद्यां चोपदिश्य स्वीयकुलपतिपदस्य अक्षरशः सार्थकतामापादितवद्भ्यः ईदृशविशिष्टकार्यभारं मयि नियोज्य अनुगृहीतवद्भ्यश्च श्रीमद्गुरुचरणेभ्यः केवलं भक्तिपूर्वकप्रणतिततिसमर्पणेनाहमात्मानं धन्यं मन्ये। श्रीपूर्णप्रज्ञविद्यापीठस्य उपकुलपतयः मम प्राध्यापकाः विद्वन्मूर्धन्याः श्री कृ. त. पाण्डुरङ्गीमहाभागाश्च ग्रन्थसम्पादनसमयेऽत्युपयुक्तसूचनाभिः सम्पादनकार्येऽस्मिन् सम्यक्तामावाह-

यन्तः अत्यन्तमुपाकुर्वत। प्राचीनशास्त्रग्रन्थसम्पादनप्रकाशनादिषु दृढदीक्षाणां विद्यापीठीयैतद्योजनायाः मूलप्रेरकाणां, विशेषतो मे संशोधनादिकर्मणि सर्वदा मार्गदर्शकानां तेषामहमत्यन्तमधमर्णोऽस्मि।

एतद्ग्रन्थस्य सम्पादनसमये अधोनिर्दिष्टा मातृकाः पाठान्तरसंशोधनार्थमुपायुज्यन्त—

१. श्री कृ. त. पाण्डुरङ्गी महोदयैः स्वीयात् श्रीविद्याधीशग्रन्थभण्डारात् दत्ता न्यायदीपिका-गीतातात्पर्यनिर्णयाभ्यां सहिता—अत्र G. 1. इति निर्दिष्टा।

२. श्री गौडगेरी गोपालकृष्णाचार्यैः दत्ता न्यायदीपिकासहितगीतातात्पर्यनिर्णययुता – G. 2 इति निर्दिष्टा।

३. पूर्णप्रज्ञविद्यापीठीयग्रन्थालयस्थः भावदीपः।

४. श्री व्यासनकेरे प्रभञ्जनाचार्यैर्दत्ता भावदीपमातृका।

५. श्रीहृषीकेशतीर्थीयपाठानुसारेण श्रीमद्भिः बन्नञ्जे गोविन्दाचार्यैः सम्पादितः अखिलभारतमाध्वमहामंडलेन प्रकाशितः सर्वमूलान्तर्गतः गीतातात्पर्यनिर्णयः – अत्र क्वचित् A इति, क्वचिच्च अ इति निर्दिष्टः।

६. श्री टी. आर्. कृष्णाचार्यैः प्रकाशितः किरणावलीसहितन्यायदीपिकायुतगीतातात्पर्यनिर्णयः।

स्वीयमातृकाप्रदानेन ग्रन्थसम्पादनकार्येऽस्मिन् अत्यन्तमुपकुर्वद्भ्यो महनीयेभ्यः सर्वेऽभ्योऽपि मदीयाः हार्दाः कृतज्ञताः संसूचयामि।

—डि. प्रह्लादाचार्यः
सम्पादकः

॥ ॐ ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक

लक्ष्मीहयग्रीवाय नमः

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# गीतातात्पर्यनिर्णयः

श्रीराघवेन्द्रयतिकृतभावदीपसहित-

## श्रीजयतीर्थविरचितन्यायदीपिकासहितः

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

**गीतातात्पर्यम्—**

समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।
नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ॥

---

**न्यायदीपिका—**

इन्दिरावदनाम्भोजराजहंसाय विष्णवे ।
अमन्दानन्दसन्दोहसुन्दराकृतये नमः ॥ १ ॥

---

॥ श्री मध्वपतये नमः ॥

**भावदीपः—**

लक्ष्मीनारायणं नत्वा पूर्णबोधादिसद्गुरून् ।
गीतातात्पर्यटीकाया भावदीपं करोम्यहम् ॥

सकलत्राञ्जनसदेवतेन्दिरोपसर्जनकभगवन्नतिरूपं मङ्गलं ग्रन्थादावाचरति ॥ इन्दिरेति ॥ एतच्च न सौख्यातिशयाय, किन्तु तदनुग्रहार्थमेवेति

धर्मविज्ञानवैराग्यपरमैश्वर्यशालिनः ।
आनन्दतीर्थभगवत्पादान् वन्दे निरन्तरम् ॥ २ ॥

स पद्मनाभतीर्थार्कगोगणोऽस्तु दृशे मम ।
न तत्त्वमार्गे गमनं विना यदुपजीवनम् ॥ ३ ॥

प्रणम्य चरणद्वन्द्वं गुरूणां तत्कृपाबलात् ।
व्याकरिष्ये यथाबोधं गीतातात्पर्यनिर्णयम् ॥ ४ ॥

**अथाशेषपुरुषार्थहेतुभूतामन्यैरन्यथा व्याख्यातां गीतां यथावद्व्याख्यातुकामो भगवानाचार्यः प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यादिप्रयोजनामिष्टदेवतानतिं शिष्टाचारपरम्परादिप्राप्तां शिष्यजनशिक्षार्थं ग्रन्थे निबध्नाति, ग्रन्थारम्भं च प्रतिजानीते ॥ समस्तेति ॥ अन्तरायपरिजिहीर्षादिमन्तो देवतान्तरनतिमाचरन्तो दृष्टाः । तत्किं नारायणप्रणामेनेत्यत उक्तम् ॥ समस्तेत्यादि ॥ नारायणस्यैव समस्तगुणसम्पूर्णत्वेनाशेषदोषदूरत्वेन निखिलप्रार्थितप्रदानसामर्थ्यादितरेषां तत्प्रसादासादितशक्तिमत्त्वात्तत्प्रणाम एव कर्तव्य इति भावः ।**

---

भावेनोक्तममन्देत्यादि । 'अशरीरः प्रज्ञात्मा' इत्युक्तेः कथमशरीरस्य वदनाम्भोजराजहंसत्वमिति शङ्कानिरासायोक्तं सुन्दराकृतय इति । प्राकृतदेहनिषेधपरा श्रुतिरिति भावः ।

ग्रन्थकर्तृन्नमति ॥ धर्मेति ॥ गुरुत्वाद्बहुवचनम् । एवमग्रेऽपि । प्राचीनटीकाकर्तृनर्थयते ॥ स पद्मनामेति ॥ सूर्यकिरणसमूहो यथा लोकस्य ज्ञानाय भवति, तथैतेषां वाक्समूहो मम ज्ञानायास्तु । उत्तरार्धेऽप्यर्थद्वयं ज्ञेयम् । श्रीपद्मनामेति पाठे यच्छब्दश्रवणात् स गोगण इति योज्यम् । अक्षोभ्यतीर्थाख्यस्वगुरून् नत्वा चिकीर्षितं प्रतिजानीते ॥ प्रणम्येति ॥

॥ अथेति ॥ प्रतिग्रन्थव्याख्याऽऽरम्यत इत्यारम्भार्थोऽथशब्दः । व्याख्याने बीजोक्तिरशेषेत्यादि । यथावदित्येतद्घटनायोक्तमन्यैरित्यादि । परिसमाप्त्यादीत्यादिपदेन प्रचयसङ्ग्रहः । परम्परादीत्यादिपदेन तदनुमितायाः

शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।।

सम्पूर्णमिति गुणानां प्रत्येकं पूर्णतामाह। विवर्जितमिति च दोषवर्जनस्य निःशेषताम्। समस्तगीतासु भगवद्गीतायाः प्राधान्यज्ञापनाय गीतेत्येवोक्तम्। "मुख्यस्य निर्विशेषेण शब्द" इति स्मृतेः। स्वयमेव गीताभाष्यस्य कृतत्वात् किं पुनरारम्भेणेत्यतस्तात्पर्यमित्युक्तम्। व्याख्यातत्वेऽपि गीतायास्तदर्थस्य शिष्याणां बुद्ध्यारोहार्थं शब्दानुकरणाद्यन्तरेण पुनस्तात्पर्यमेवोच्यत इति भावः।

नन्वनेकेषु ग्रन्थेषु विद्यमानेषु को विशेषो गीताया येन तस्या एव तात्पर्यमुच्यते। अपि च, भारतमध्यगतत्वाद्गीतायाः कुतस्तस्या एव पृथक् तात्पर्यमुच्यत इत्यतो भारतस्य सर्वशास्त्रोत्तमत्वाद्युक्तं तदन्तर्गतगीताया एव तात्पर्यकथनम्। भारतेऽपि गीताया उत्तमत्वात्तस्याः पृथक्तात्पर्यकथनं चोपपन्नमिति परिहारमभिप्रेत्य भारतस्य सर्वशास्त्रोत्तमत्वं, भारतेऽपि गीताया एव उत्तमत्वमेव कुत इत्यतस्तत्पुराणवचनेन साधयति ॥ शास्त्रेष्विति ॥ भारतेऽपि गीतानामसहस्रयोरुत्तमत्वं कुत इत्यत आह ॥ तदिति ॥ भारतज्ञानादप्याञ्जस्येन गीतादिज्ञानस्य मोक्षसाधनत्वाद्युक्तं भारतेऽपि गीतादेरुत्तमत्वमिति भावः।

गीतानामसहस्रसमानशास्त्रान्तरज्ञानस्याप्याञ्जस्येन मोक्षहेतुत्वात् को विशेषो गीतादेरित्यत आह ॥ नेति ॥

---

'प्रारिप्सितसमाप्त्यादिकामः स्वेष्टदेवतानतिं कुर्यात्' इति श्रुतेर्ग्रहः। निबन्धनस्य कृत्योक्तिः शिष्येति। शिष्यैरप्येतदवश्यं कार्यमिति ज्ञापनार्थमित्यर्थः।

समस्तपदेनापौनरुक्त्यमाह ।। सम्पूर्णमिति ।। सम्मतगीतास्विति ।। वेणुगीताभ्रमरगीतागोपिकागीताभिक्षुगीतेत्यादिरूपास्वित्यर्थः ।। स्मृतेरिति ।। सूत्रभाष्योक्तस्मृतेरित्यर्थः।

।। तस्या एवेति ।। भारतस्य वा तदन्तर्गतग्रन्थान्तरस्य वा त्यागेनेति योज्यम्। नन्वित्यादिना कृतचोद्यस्य शास्त्रेष्विति श्लोकस्थपूर्वोत्तरार्धतात्पर्योक्त्योत्तरमाह भारतस्येत्यादिना।

न भारतसमं शास्त्रं कुत एवानयोः समम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥
देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ॥
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥
स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः ।
अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ॥
चकार पञ्चमं वेदं महाभारतसंज्ञितम् ॥

इति ब्रह्माण्डे ।

---

भारतस्य सर्वशास्त्रोत्तमत्वमेव कुत इत्यत आह ॥ भारतमिति ॥ वेदपदेन वेदयन्तीति सर्वशास्त्राण्युच्यन्ते । भारतादेस्तुलाऽऽरोपणं नाम तत्प्रतिनिधेरारोपणम् । एतदेव कुत इत्यतो महाभारतशब्दार्थ-पर्यालोचनयैव ज्ञायत इत्याह ॥ महत्त्वादिति ॥ महत्त्वात्तत एव भारेण ततत्वाच्च महाभारतमित्यर्थः । किञ्च महाभारतशब्दनिर्वचन-ज्ञानादेव यदा सर्वपापक्षयो भवति तदा किं वाच्यं तस्य सर्वशास्त्रोत्त-मत्वमिति भावेनाह ॥ निरुक्तमिति ॥ निरुक्तं निर्वचनम् । अस्य महा-भारतशब्दस्य ।

भारतस्यैवं सर्वशास्त्रोत्तमत्वे किं निमित्तमित्यतः परमाप्तकृतत्वं दर्शयति ॥ स्वयमिति ॥

नन्वाप्तो नाम यथार्थदर्शी यथादृष्टार्थवादी च । तत्र व्यासस्य यथार्थदर्शित्वं कुतः ? भगवदवतारेष्वपि पृथ्व्यादिष्वज्ञानादिदर्शना-दित्यत उक्तम् ॥ स्वयमिति ॥

---

प्रतिनिधेः पाषाणादेः । महत्त्वं भारहेतुरित्याह ॥ महत्वात्तत एव भारेण ततत्वादिति ॥ महत्वाद्भारो महाभारः । निरुक्तत्वादेव महत आ

तत्र साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतममर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मे नारायणद्विट्तदनुबन्धिनिग्रहं

---

अस्तु व्यासस्य यथार्थदर्शित्वं साक्षान्नारायणावतारत्वेनाज्ञानभ्रमसन्देहशून्यत्वात्। यथादृष्टार्थवादित्वं तु कुतः? तस्य प्रमादेनायथादृष्टवादित्वाभावेऽपि विप्रलिप्सया तत्सम्भवादित्यत आह ॥ ब्रह्मेति ॥ वक्तुर्विप्रलिप्सा श्रोतॄणामयोग्यतायां सम्भवति। प्रकृते च ब्रह्मादीनां योग्यानामेव श्रोतृत्वेन भगवतो विप्रलम्भाभावाद्युक्तं यथादृष्टार्थवादित्वमिति भावः। अपहासेनायथादृष्टार्थवादित्वं किं न स्यादित्यत आह ॥ तत्त्वेति ॥ अपहासस्य प्रसक्तदोषनिबन्धनत्वादत्र च तत्त्वनिर्णयस्य प्रसक्तत्वेन तदसम्भवान्नात्रापहासेनापि व्यासस्यायथादृष्टार्थवादित्वमिति भावः। एवंभूतासरचितत्वस्य भागवतादिष्वपि साम्यात्को विशेषो भारतस्येत्यत उक्तम् ॥ केवलमिति ॥ नासुरमोहनाद्यर्थमप्यत्रान्यदुच्यते। अन्यथाप्रतीतस्य गुह्यदर्शनभाषाभ्यामुक्तत्वात्। अन्यत्र कचिद्व्यामोहनार्थमन्यथा कथनादिति भावः। एवं परमाप्तिमूलत्वेनैव न भारतस्य सर्वशास्त्रोत्तमत्वं किन्तु वेदसंवादितया पञ्चमवेदत्वेनापीति भावेनाह ॥ पञ्चममिति ॥

एवं गीतातात्पर्यकथनस्य युक्ततां प्रसाध्य श्रोतृशेमुषीमनुकूलयिष्यन्नादावेव अशेषगीताप्रतिपाद्यमर्थं सङ्क्षेपेण दर्शयति ॥ तत्रेति ॥

---

पञ्चमीसमासश्च ज्ञेयः। तेन महाभारेण ततत्वाद्व्याप्तत्वात्। महाभारोपपदात् तनोतेर्डप्रत्यय इति भावः। निर्वचनमवयवार्थकथनम्। 'एष विष्णोर्भगवतः कला भुवनपावनी' इत्यादि पृथुं प्रति ऋषिभिरुक्तं हृदि कृत्वा शङ्कते ॥ पृथ्वादिष्विति ॥ आदिपदेन बलरामकार्तवीर्यार्जुनादिग्रहः। 'आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः' इति, 'पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम्' इत्यादिवचनात्तेषां न साक्षादवतारत्वमस्तीति भावेन स्वयंशब्दार्थमाह ॥ साक्षान्नारायणेति ॥ गुह्येति ॥ भाषाद्वयं भारततात्पर्यद्वितीये व्यक्तम्। अन्यत्र पुराणेषु ॥

बन्धुस्नेहादधर्मत्वेनाशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मस्तद्विरुद्धः सर्वोऽप्यधर्मो भगवदधीनत्वात्सर्वस्येति बोधयति भगवान्नारायणः ।

---

तत्र गीतायाम् । इति कथ्यत इति शेषः । कृष्णस्याप्यर्जुनादविशेषात्कथं तद्बोधकत्वमित्यतो भगवान्नारायण इत्युक्तम् । आप्तसमस्तकामस्य भगवतः किमर्जुनबोधनेनेत्यत उक्तम् ॥ आत्मन इति ॥ प्रयोजनाभावेऽपि प्रीत्यतिशयवशान्मातुरपत्यपालनवत्तद्बोधनं युक्तमिति भावः । अर्जुनस्य भगवत्प्रियत्वमेव कुतः ? अपरोक्षज्ञानित्वात् "ज्ञानी प्रियतमोऽतो मे" इति स्मृतेरिति चेत्तदेव कुत इत्यत आह ॥ उत्तमेति ॥ एतदपि कुत इत्यत आह ॥ साक्षादिति ॥ साक्षादिन्द्रः पुरन्दरः । साक्षादवतारो नावेशमात्रमिति वा । अत्र देवत्वमेव वक्तव्यम् । इन्द्रावतारमिति स्वरूपकथनम् । अर्जुनबोधने का प्राप्तिरित्यत आह ॥ नारायणेति ॥ बान्धवादिनिग्रहस्याधर्मत्वात् किमुच्यतेऽधर्मत्वेनाशङ्क्येत्यत एतन्निग्रहस्य कैमुत्येन धर्मत्वमाह ॥ क्षत्रियाणामिति ॥ भागवतमात्रस्यैतादृशनिग्रहः परमधर्मः । अत्रैव नियुक्तानां क्षत्रियाणां तु विशेषतोऽपि परमधर्म इत्यर्थः । बान्धवादिनिग्रहः कथं परमधर्म इत्यतो बान्धवादीति वक्तव्ये नारायणद्विट्तदनुबन्धीत्युक्तम् । बान्धवादित्वेऽपि केषाञ्चिन्नारायणद्वेषित्वात् केषाञ्चित्तत्सम्बन्धित्वात् तन्निग्रहो धर्म एवेति भावः ।

नन्वयं धर्मश्चेच्छास्त्रोदित एव भवेत् । तथा च न शास्त्रविदुषाऽधर्मत्वेनाऽऽशङ्क्येत । शङ्क्यते च । अतो न धर्म इत्यत आह ॥ बन्धुस्नेहादिति ॥ न शास्त्रमुखेनेयं शङ्का । अपि तु स्नेहमात्रनिबन्धनैवेति

---

उपोद्घातः—॥ अनुकूलयिष्यन्निति ॥ सङ्क्षेपेणोक्ते प्रपञ्चं जिज्ञासवो भवन्तीति प्रपञ्चनेऽपि जिज्ञासाजननमत्रानुकूलनमिति भावः ॥ इति शेष इति ॥ नारायणपदानन्तरं इतिपदं कथ्यत इति पदञ्चाध्याहार्यमित्यर्थः ॥ इति स्मृतेरिति ॥ 'ज्ञानेनासौ बिभर्ति माम्' इति भागवतस्मृतेरित्यर्थः ॥ अत्र ज्ञानित्वे । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः ।' इति स्मृतेरिति भावः ॥

सर्वंश्चैतदत्रैवावगम्यते ॥

भावः। ज्ञानिनः स्नेहमात्रेण सञ्जातया शङ्कया कथं स्वकीयपरमधर्मनिवृत्तिरित्यत उक्तम् ॥ निवृत्तप्रायमिति ॥ एवमाशङ्कया निवृत्तप्रायश्चेदेतद्युद्धकरणमेव बोधनीयं, भगवन्महिमादिकं किमर्थमुच्यत इत्यतो बोध्यार्थमाह ॥ स्वेति ॥ न केवलं युद्धादिस्वविहितवृत्तिमात्रं परमो धर्मः। येन तदेव बोध्यं स्यात्। अपि तु भक्त्यादिकमपि। तत्रार्जुनस्य धर्मैकदेशेऽधर्मशङ्कायामपि प्राप्तलोकोपकाराय समग्रधर्मो भगवता बोध्यते। तत्र भगवन्महिमाद्युक्तिस्तु भक्त्युत्पादनायेति भावः।

ननु युद्धादिस्वविहितवृत्तिनिवृत्तोऽप्यर्जुनो न परमधर्मनिवृत्तः। भक्त्यादिमत्त्वात्। अतः किं बोध्यत इत्यत आह ॥ तदिति ॥ न भक्त्यादिकं प्रत्येकं परमधर्मः। येन तावता तस्य न परमधर्मनिवृत्तिः। किन्तु मिलितमेव। अतोऽन्यतमाभावेऽपि परमधर्मनिवृत्तेर्युक्तं तद्बोधनमिति भावः। तर्हि प्रकृत्यादिवर्णनं कोपयुज्यत इत्यतोऽस्तु स्वविहितवृत्तेर्धर्मत्वं, तद्विरुद्धस्याधर्मत्वं च। भगवद्भक्त्या तदाराधनस्य धर्मत्वं तद्विरुद्धस्याधर्मत्वं च कुत इत्याशङ्कानिवारणाय सर्वस्य भगवदधीनत्वहेतुं वक्तुं सर्वनिरूपणमिति भावेनाह ॥ भगवदिति ॥ सर्वस्य भगवदधीनत्वेन धर्माधर्मतया भगवन्नियतयोरेव तथाभावात्तस्य चैवं विधयोरेव तथा नियमनोपपत्तेरिति भावः।

नन्वर्जुनस्य देवत्वादि कुतः। स्वविहितेत्यादेर्गीतातात्पर्यार्थत्वं च कुत इत्यत आह ॥ सर्वंश्चेति ॥ अर्जुनो देव इत्याद्येतच्च सर्वं गीतायामेवावगम्यते। न च प्रमाणान्तरं तत्रान्वेषणीयम्। स्वविहितेत्यादिकं च सर्वं गीतायामवगम्यत एव। न तु तदर्थतया बलादुच्यत इत्यर्थः। तत्र तावन्नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाऽऽशङ्क्य

अत्रैवेति ॥ द्विट्तदनुबन्धिनिग्रह एवेत्यर्थः ॥ केषाञ्चिदिति ॥ दुर्योधनादीनां। भीष्मद्रोणादीनां तदनुबन्धित्वादिति भावः ॥ शास्त्रविदुषा ॥ अर्जुनेनेत्यर्थः ॥ धर्मैकदेश इति ॥ युद्धरूपे। समग्रधर्मः स्वविहितवृत्तिभगवद्भक्त्यादिरूपः ॥ मिलितमेवेति ॥ भक्तिवैराग्यादिपूर्वकं स्वविहितवृत्तिः परमधर्म इत्यर्थः।

अथ चेत्त्वं धर्म्यमिमं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥

इत्यादिना युद्धस्य स्वधर्मत्वम् ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
सर्वं गुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं, तदन्यस्य त्याज्यत्वं च ।

---

ततो निवृत्तप्रायमर्जुनं भगवान्नारायणो बोधयतीत्येतावद्गीतायां स्फुटमवगम्यते । "यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे" इति प्रार्थनात्तस्य निवृत्तप्रायतावगमात् । साक्षान्निवृत्तौ तदनुपपत्तेः ।

नारायणद्विट्तदनुबन्धिनिग्रहस्य क्षत्रियाणां परमधर्मत्वं गीतायां केनावगम्यत इत्यत आह ॥ अथेति ॥ युद्धस्य उक्तविधस्येति शेषः । अवगम्यत इति सर्वत्रानुषज्यते ।

स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमधर्मः । तद्विरुद्धः सर्वोऽप्यधर्म इत्येतत्केनावगम्यत इत्यत आह ॥ यत इति ॥

---

युद्धनिवृत्तिरपि परमधर्मविरुद्धत्वादधर्म एवेति तद्बोधनमपि कार्यमेवेत्यर्थः ॥ तथाभावात् ॥ धर्माधर्मभावादित्यर्थः । तद्विरुद्धमपि धर्मत्वेन नियमयति चेत् धर्मो भवत्येवेत्यत आह ॥ तस्य चेति ॥ हरेः स्वभक्त्यादिपूर्वकस्वविहितवृत्तितद्विरुद्धरूपयोरेव धर्माधर्मत्वेन नियमनोपपत्तिरित्यर्थः ॥ उक्तविधस्येति ॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

---

यत इत्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्य कर्तव्यत्वमवगम्यते । भक्त्याऽर्चनस्यैवाभ्यर्चनत्वात् । स्वकर्मणेत्यनेन स्वविहितवृत्त्या भगवदाराधनस्यैव मुख्यतः कर्तव्यत्वम् । मोक्षसाधनस्यैव मुख्यकर्तव्यत्वात् । श्रेयानित्यनेन स्वविहितवृत्तेः कर्तव्यत्वमस्वविहितवृत्तेस्त्याज्यत्वं च । श्रेयस एव कर्तव्यत्वादश्रेयसस्त्याज्यत्वात् । सर्वेत्यनेन भक्त्या भगवदाराधनस्य कर्तव्यत्वम् । सर्वगुह्यतमतया, हितसाधनतया, भगवत्प्राप्तिसाधनतया च विहितस्य कर्तव्यत्वात् । सर्वधर्मानित्यनेन स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव कर्तव्यत्वं, तदन्यस्य त्याज्यत्वं च । स्वविहितवृत्त्या भक्त्या भगवदाराधनस्यैव शरणागतित्वात् । सर्वधर्मपदेनैतद्विरुद्धस्य धर्माभासस्य विवक्षितत्वात् । सर्वपापगमनहेतुतया विहितस्य कर्तव्यत्वात् । तदर्थत्वेन निषिद्धस्य त्याज्यत्वात् ॥ स्वधर्मेण ॥ भक्त्या चेति संयोज्यम् । कर्तव्यत्याज्यत्वाभ्यां धर्माधर्मत्व इति भावः ।

ननु श्रवणादिरूपस्वविहितवृत्त्यैव परोक्षापरोक्षज्ञानसिद्धेस्तत्साधनस्यैव परमधर्मत्वान्न भक्तिः परमधर्मतया गीताभिमतेत्यत आह ॥ नाहमिति ॥

अभिमतैव गीतायां भक्तिः परमधर्मत्वेन । परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य गीतायामेव तदधीनत्वावगमात् । न चैवं श्रवणादिवैयर्थ्यम् । अन्यथा ज्ञानादेर्भक्त्यधीनत्वानुपपत्तिरिति वाच्यम् ।

---

भक्तिपूर्वं स्वविहितवृत्त्या क्रियमाणस्य भगवदाराधनस्येत्यर्थः । कर्तव्यत्वे हेतुश्चतुर्थपादेन लब्ध इति भावेनाह ॥ मोक्षेति ॥ ते हितमिति मामेवैष्यसीत्याभ्यां लब्धहेतू आह हितेत्यादिना ॥ त्याज्यत्वं चेति ॥ अवगम्यत इति योज्यम् । तद्व्यनक्ति भक्त्येत्यादिना । स्वधर्मेणेत्यनुवादेन शेषमाह ॥ भक्त्या चेति संयोज्यमिति ॥ भक्त्या भगवदाराधनमेव धर्मस्तद्विरुद्धस्त्वधर्म इत्येषोर्थोऽनेन कथं लब्ध

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥
(गी. ११-५३, ५४)

इत्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च ।

'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ (गी. ११-५५)

इत्यादिना भक्तस्यापि तत्कर्म विकर्मत्यागश्च ।

---

श्रवणादेर्ज्ञानादिसाधनत्वेऽपि भक्तेरेव तेभ्यः श्रवणादिसर्वसाधनेभ्य उत्तमत्वस्यात्र विवक्षितत्वादिति भावः ।

ननु न भक्त्या स्वविहितवृत्त्या भगवदाराधनं कर्तव्यं तद्विरुद्धं त्याज्यमिति गीताभिमतम् । तत्र भक्तिमतः कर्तव्यत्याज्याभाव[1]मात्रस्याभिमतत्वादित्यत आह ॥ मत्कर्मेति ॥

न भक्तस्य कर्तव्यत्याज्याभावो गीताभिमतः । तत्रैव भक्तस्यापि स्वविहितवृत्त्या भगवदाराधनस्य कर्तव्यतया तद्विरुद्धस्य त्याज्यतयाऽवगमादिति भावः । यदुक्तं स्वविहितवृत्तिरूपं मद्विषयं च कर्म मत्कर्म तदेव तत्कर्म । सङ्गवर्जितोस्वविहिताभगवद्विषयकर्मसङ्गवर्जितः । तदेव विकर्मोच्यते । भगवत्प्राप्तिहेतुतयोक्तमेव कर्म कर्तव्यम् । तदर्थत्वेन निषिद्धमेव त्याज्यमिति ।

---

इत्यत आह ॥ कर्तव्येति ॥ परमधर्मत्वेन भक्तिर्गीतायामभिमतेति कुत इत्यतो मूलं योजयति ॥ परोक्षेति ॥ ज्ञातुं द्रष्टुं चेत्युक्तपरोक्षापरोक्षयोः प्रवेष्टुं चेत्युक्तज्ञानिमोक्षस्य च भक्त्या त्वनन्ययेति भक्त्यधीनत्वावगमादित्यर्थः ॥ अन्यथेति ॥ ज्ञानस्य श्रवणाद्यधीनत्व इत्यर्थः । शङ्कोत्तरत्वेन मूलार्थमाह ॥ श्रवणादेरिति ॥ उत्तमत्वस्येति ॥ तथा च सूत्रं—"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः" (ब्र. सू. ३-३-५४) इति ॥ तत्रेति ॥ सर्वधर्मानिति श्लोके

---

1. G. 1. त्याज्याभावस्य

कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् । (गी. ४-१५)

इत्यादिना ज्ञानिनोऽपि भगवत्कर्म ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥
(गी. ११-५२)

इष्टोसि मे दृढमिति ततो[1] वक्ष्यामि ते हितम् ।
(गी. १८-६४)

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ।(गी.१६-५)

---

नन्वर्जुनस्य ज्ञानित्वे कथं तं प्रति स्वविहितवृत्त्या भगवदाराधनं विधीयते । ज्ञानिनस्तदभावस्य गीताभिमतत्वादित्यत आह ॥ कुर्विति ॥

न ज्ञानिनः स्वविहितवृत्त्याद्यभावो गीताऽभिमतः । तत्र 'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव ' इति ज्ञानिनोऽपि स्वविहितवृत्त्यादेः कर्तव्यतयाऽवगमादिति भावः । स्वविहितं, भगवदर्थमेव पूर्वैः कृतं तदुभयमेव भगवत्कर्म ।

यदुक्तमर्जुनो भगवतोऽतिप्रियोपरोक्षज्ञान्युत्तमाधिकारी देवश्चेति तत्केनावगम्यत इत्यत आह ॥ सुदुर्दर्शमिति ॥

सुदुर्दर्शमित्यनेनापरोक्षज्ञानित्वमवगम्यते । देवैः सह पठितत्वेन देवत्वं च । इष्टोसीति प्रियतमत्वम् । दैवीति देवत्वम् । महात्मान

---

कर्तव्यस्य त्याज्यस्य चाभावोऽभिमत इत्यर्थः । हेयोपादेयाभावेन शरणागतिरेव तस्याभिप्राय इति शङ्कितुर्भावः । यद्वा तत्रेत्यस्य गीतायामित्यर्थ इति ज्ञेयम् । एतद्द्वयं मत्कर्मकृन्मत्परम इति श्लोके कथमवगम्यत इत्यतोऽनुवादव्याजेन व्यनक्ति यदुक्तमित्यादिना । गीतापदार्थमुक्त्वा तत्कर्मेति मूलपदस्यार्थमाह ॥ ॥ तदेव तत्कर्मेति ॥ कर्मधारय इत्युक्तं भवति । अस्मच्छब्दात्तद्भगवद्विषयं कर्मैव भक्तस्य कर्मेत्यर्थः । तदर्थत्वेन भगवदर्थत्वेन निषिद्धमेवेत्यर्थः ॥ तत्रेति ॥

---

1. A. 'ततो वक्ष्यामि ते हितम्' इति पाठः न दृश्यते ।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ (गी. ९-१३)
दर्शयामास पार्थाय परमं रूपमैश्वरम् । (गी. ११-९)

इत्यादिनाऽर्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वं च ।

'न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ।
यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।'
(गी. १०, २-४)

---

इत्यनन्यमनस्कतया भगवन्तं भजतां देवत्वमपरोक्षज्ञानित्वं चावगम्यते । तादृशभजनवतश्चार्जुनस्य तज्ज्ञायते । दर्शयामासेत्यपरोक्षज्ञानित्वम् । भगवदतिप्रियत्वं देवत्वं चेति संयोज्यम् । देवत्वेनैवोत्तमाधिकारित्वं चावगतम् ।

यदुक्तं सर्वस्य भगवदधीनत्वं तत्केनावगम्यते । तथात्वे च तस्य सर्वस्माद्भेदेन, सर्वस्य च सत्यत्वेन, तस्य सर्वोत्तमत्वेन, सर्वगुणपूर्णत्वेन, निर्दोषत्वेनानन्याधीनत्वेन, मोक्षप्रदत्वेन, सर्वशास्त्रप्रतिपाद्यत्वेन च भाव्यम् । सर्वस्य तदधीनतायाः साक्षात्परम्परया चैतत्सापेक्षत्वात् । तदेतत्सर्वं केनावगम्यत इत्यत आह ॥ नेति ॥

न मे विदुरित्यनेन पूर्णत्व[1]मवगम्यते । अहमादिरिति सर्वोत्तमत्वम् । यो मामिति निर्दोषत्वं, सर्वस्य तदधीनत्वं, तज्ज्ञानान्मोक्षश्च ।

---

गीतायामित्यर्थः । तद्व्यञ्जयन् मूलार्थमाह ॥ स्वविहितमिति ॥ अवगम्यत इति सर्वत्र योज्यमिति प्रागेवोक्तम् । तदुभयमित्यस्य स्वविहितं भगवदर्थं चेत्यर्थः ॥ इत्यनेनेति ॥ इत्यर्धेनेत्यर्थः । साक्षात्परम्परयेति ॥ निर्दोषत्वेनेत्यन्तस्य साक्षादपेक्षितत्वम् । अन्येषां तु परम्परया ॥ अभिन्ने निस्स्वरूपे स्वस्मादुत्तमे वस्तुनि स्वस्य सार्वज्ञसर्वशक्त्यादिगुणहीनत्वेन, जननमृत्यादिदोषवत्त्वे सार्वकालिके

1. G. 1, 'पूर्णमहिमत्वमवगम्यते' इति पाठः ।

'महर्षयः सप्त पूर्वे ।' (गी. १०-६)
'एतां विभूतिं योगं च ।' (गी. १०-७)
'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।'
(गी. १०-८)
'तेषामेवानुकम्पार्थमहमज्ञानजं तमः । [1]नाशयामि ।'
(गी. १०-११)
'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।' (गी. १२-७)
'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।'
(गी. ५-२९)
'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।' (गी. ७-२)

---

जन्मादीनां दोषत्वात् । सर्वपापक्षयस्य मोक्षत्वात् । बुद्धिरिति सर्वस्य तदधीनत्वम् । एतामिति तज्ज्ञानान्मोक्षः । निष्कम्पयोगस्य सायुज्यत्वात् । अहमिति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । अज्ञानजतमसः संसारत्वात् । तेषामिति तज्ज्ञानान्मोक्षः । भोक्तारमिति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । शान्तेर्मोक्षत्वात् । ज्ञानमिति सर्वशास्त्राणां तत्परत्वम् । भगवज्ज्ञानेनैव सर्वशास्त्राणां ज्ञातत्वोक्तेः ।

---

सार्वदेशिके च सर्ववस्तुनि नियमनायोगात्, अन्याधीनत्वे तदनुमतिं विना स्वेच्छाऽदिद्वाराऽन्यस्यैव मोक्षहेतुत्वे पुमर्थदानद्वारा शास्त्रप्रतिपाद्यत्वस्यापि विधिनिषेधज्ञापनस्योपास्त्यादिद्वारा नियमनस्याकार्यत्वादिति भावः ॥ सर्वस्य तदधीनत्वमिति ॥ 'लोकमहेश्वरम्' इत्यनेनेति भावः ॥ बुद्धिरितीति ॥ सर्वस्य तदधीनत्वमिति ॥ 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति वाक्यशेषादिति भावः । सप्तर्षय इत्युपक्रम्य 'एतां विभूतिं योगं च मम यो वेत्ति

---

1. A. 'आत्मभावस्थः' इत्यधिकः पाठः ।

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।' (गी. ७-६, ७)
'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।
राजविद्या राजगुह्यम् ।' (गी. ९-१, २)
'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
भूतभृन्न च भूतस्थः ।' (गी. ९-४, ५)
'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः ।' (गी. ११-४३)
'परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।' (गी. १४-१)
'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।' (गी. १४-३)
'ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।' (गी. १४-२७)
'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

---

अहमिति सर्वस्य तदधीनत्वम् । मत्त इति सर्वोत्तमत्वम् । मयीति सर्वस्य तदधीनत्वम् । इदमिति तज्ज्ञानान्मोक्षः । राजेति सर्वशास्त्राणां तत्परत्वम् । भगवद्विद्यायाः प्राधान्योक्तेः । प्रधानानुसारित्वाच्चाप्रधानानाम् । मयेति सर्वस्य तदधीनत्वं निर्दोषत्वं च । ततेः प्रेरणार्थत्वात् । अव्यक्तपदेन चाकार्यत्वोक्तेः । न चाहमिति तस्यानन्याधीनत्वम् ।

---

तत्त्वतः । सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥' इति वाक्यशेषे श्रवणादाह ॥ निष्कम्पेति ॥ करणव्युत्पत्तिमुपेत्याह ॥ सर्वशास्त्राणामिति ॥ ज्ञानविज्ञानपदयोः शास्त्रार्थत्वेऽपि भगवत्परत्वं कथं लब्धमित्यत उक्तम् ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥'
(गी. १५. १६-२०)

'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं ... ... ... ॥' (गी. ३-२२)

इत्यादिना सर्वस्माद्भगवतो भेदः, सर्वस्य तदधीनत्वं, [1]सर्वगुणपूर्णत्वं, सर्वशास्त्राणां तत्परत्वं तथा तज्ज्ञानादेव मोक्ष इत्यादि ।

---

भूतभृदिति सर्वस्य तदधीनत्वम् । तस्यानन्याधीनत्वं च । न त्वदिति सर्वोत्तमत्वम् । परमिति सर्वशास्त्राणां तत्परत्वम् । ज्ञायतेऽनेनेति ज्ञानशब्दोदितभगवच्छास्त्रस्य सर्वशास्त्रोत्तमत्वोक्तेः । अप्रधानस्य प्रधानानुयायित्वात् । ममेति सर्वस्य तदधीनत्वम् । ब्रह्मणो हीति सर्वस्य तदधीनत्वं तज्ज्ञानान्मोक्षश्च । द्वाविति सर्वस्माद्भगवतो भेदः, सर्वोत्तमत्वं, सर्वस्य तदधीनत्वं, सर्वशास्त्राणां तत्परत्वं तज्ज्ञानान्मोक्षश्च ।

---

भगवदिति ॥ 'यज्ज्ञात्वा' इत्यर्धेनोक्तेरित्यर्थः । यद्वा 'येनाश्रुतं श्रुतं भवति' इत्यादौ भगवज्ज्ञानेनैव सर्वस्य ज्ञातत्वोक्तेरिह च 'यज्ज्ञात्वा नेह भूयोऽन्यत्' इत्यादिना ज्ञातत्वोक्तेर्भगवत्परत्वं सर्वशास्त्राणां सिद्धमित्यर्थः ॥ प्राधान्योक्तिरिति ॥ राजविद्येत्यस्य प्रधानविद्येति व्याख्यानादिति भावः ॥ तज्ज्ञानान्मोक्षश्चेति ॥ सुखस्यैकान्तिकस्य प्रतिष्ठाऽहमित्युक्तेरिति भावः । अन्य इत्युक्तेराह

---

1. G. A. एतत्पूर्वं 'तस्यानन्याधीनत्वं, सर्वोत्तमत्वं' इति पाठः ।

'अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ।' (ऋ. मं. १, सू. १५६-१)

'पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।
यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ॥'
'भक्त्या प्रसन्नः परमो दद्याज्ज्ञानमनाकुलम् ।
भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् ॥
ततोऽपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत् ।'

---

न मे पार्थेति पूर्णत्वम् । प्रथमाऽदिपदेनासत्यमप्रतिष्ठं त इत्यादि, द्वितीयेन जगत्सत्यत्वं गृह्यते ।

यदुक्तं ज्ञानिनोऽपि भगवत्कर्मेति तत्र श्रुतिं चोदाहरति ॥ अधेति ॥

अथ विष्णो ते स्तुतिर्यज्ञश्च हविष्मता ज्ञानिनाऽप्यर्ध्यः साध्यश्चेत्यर्थः । ज्ञानिनो मोक्षनियमात्किं कर्मणेत्यत आह ॥ पश्यन्नपीति ॥ सुनियतं वर्णाश्रमोचितम् । आप्नुयात् तेनेति शेषः । यद्यस्मात्तेनात्मनः कलृप्तमानन्दोत्कर्षमाप्नुयात्तस्मादिति वा ।

यदुक्तं विष्णुभक्तेरेव सर्वसाधनोत्तमत्वमित्यादि तत्र श्रुतिं दर्शयति ॥ भक्त्येति ॥

ज्ञानं विना भक्तेरभावात्कथं भक्त्या ज्ञानमित्यत उक्तम् ॥ अनाकुलमिति ॥ प्रागल्पतयाऽऽकुलस्य सतोऽनाकुलत्वं भक्त्या भवतीति भावः ।

---

॥ भेद इति ॥ उत्तम इत्युक्तेरुक्तमुत्तमत्वमिति । बिभर्तीत्युक्तेराह ॥ सर्वस्य तदधीनत्वमिति ॥ 'लोके वेदे च प्रथितः' इत्युक्तेराह ॥ सर्वशास्त्राणामिति ॥ बुद्धिमान् कृतकृत्यश्चेत्युक्तेराह ॥ तज्ज्ञानान्मोक्षश्चेति ॥ असत्यमप्रतिष्ठं त इति ॥ तेनासत्यताऽदिवादिनां निन्दया जगत्सत्यत्वावगमादिति भावः ॥ यदुक्तमिति ॥ कुरु कर्मेत्यादिवाक्यमुदाहृत्य ज्ञानिनोपि भगवत्कर्मेति यदुक्तमित्यर्थः । ज्ञानिनापि राध्यः साध्यः ॥ मोक्षनियमादिति ॥ "अनियमः सर्वेषाम्" (ब्र. सू. ३-३-३५) इति सूत्रादिति भावः । यच्छब्दश्रवणादाह ॥ तेनेति शेष इति ॥ वर्णाश्रमोचितकर्मणेत्यर्थः ॥ तस्मादिति वेति ॥ कर्म

बुद्धिर्निर्णीततत्त्वानामेका विष्णुपरायणा ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥'

इति ब्रह्मवैवर्ते ॥ ४१ ॥

अव्यवसायबुद्धिः केषाम् । यां वाचमविपश्चितः प्रवदन्ति तयाऽपहृतचेतसां बुद्धिः व्यवसायात्मकत्वेन समाधाने न वर्तते ।

'यथा वस्तु तथा ज्ञानं तत्साम्यात्सममीरितम् ।
विषमं त्वन्यथाज्ञानं समाधानं समस्थितिः ॥

---

तथापि तेन मोक्षादिसिद्धेः कथं भागवतस्यैव मोक्ष उक्त इत्यतः पाषण्डादिवत्तस्य निषिद्धत्वान्न मोक्षसाधनत्वमिति भावेनाह ॥ वेदेति ॥ न केवलं मोक्षसाधनत्वाभावोऽपि तु तमःसाधनत्वं चास्तीत्याह ॥ तेभ्य इति ॥ 'अनारम्भमनन्तं च' इति तमसि दुःखानुभवानुवृत्तेराद्यन्तशून्यत्वमुच्यते । 'यस्मान्नैवोत्थितिः' इति तत्प्राप्तानामपुनरावृत्तिरुच्यते । तमसः पुनरावृत्तिराहित्यं कुत इत्यत आह ॥ वव्रमिति ॥ स्वगतानां गमनं वारयतीति वा, सदा वृणोतीति वा वरमानन्दं वारयतीति वा वव्रम् । 'वव्रमनन्तम्' इत्यादिवेदगदितम् ॥ ४० ॥

एवंविधश्चेदयं वैष्णवो धर्मः तर्हि किमिति कैश्चिदेवैकमत्येनानुष्ठीयते, परस्परविरुद्धतया बहुभिर्नानुष्ठीयत इत्यत आह ॥ बुद्धिरिति ॥ केषाञ्चिदेव बुद्धेर्निर्णीतत्वात्तावन्त एवैकमत्येन विष्णुपरायणाः । बहूनामनिर्णीतबुद्धित्वात्परस्परविरोधेन न विष्णुपरत्वमिति भावः । अनेन व्यवसायेति श्लोकोपि व्याख्यातो भवति ॥ ४१ ॥

यद्यव्यवसायात्मकबुद्धित्वमेव वैष्णवधर्मराहित्ये निमित्तं तर्ह्यव्यवसायबुद्धिस्त्याज्या स्यात् । त्यागश्च कारणपरित्यागेन स्यात् । केन कारणेनाव्यवसायबुद्धिर्भवतीति पृच्छति ॥ अव्यवसायेति ॥ तत्परिहाराय 'याम्' इति श्लोकान् योजयति ॥ यामिति ॥ समाधान

---

पात इति योज्यम् । अपौनुरुक्त्यायार्थभेदमाह ॥ अनारम्भमित्यादिना ॥ कारणपरित्यागेनेति ॥ अव्यवसायबुद्धेर्यत्कारणं तत्परित्यागेनेत्यर्थः । तथेत्य-

*

न तद्भवत्यसद्वाक्यैर्विषमीकृतचेतसाम् ।
स्वर्गादिपुष्पवाद्येव वचनं यदचेतसाम् ॥
न मन्यन्ते फलं मोक्षं विष्णुसामीप्यरूपकम् ।
फलदं च न मन्यन्ते तं विष्णुं जगतः पतिम् ॥
भोगैश्वर्यानुगत्यर्थं क्रियाबाहुल्यसन्तताम् ।
बहुसंसारफलदामन्ते तमसि पातनीम् ॥
यां वदन्ति दुरात्मानो वेदवाक्यविवादिनः ।
तया सम्मोहितधियां कथं तत्त्वज्ञता भवेत् ॥' इति च ।
'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा
इमं लोकं हीनतरं वा विशन्ति ॥'

इति चाथर्वणी श्रुतिः ।

'वेदवादरतो न स्यान्न पाषण्डी न हैतुकी' इति हि भागवते ।

---

इति निश्चयस्य तत्त्वविषयतया दार्ढ्यमुच्यते । समाधानाभावे च न विष्णुधर्मानुष्ठानमिति वाक्यशेषः ।

स्मृत्यैव श्लोकान् व्याचष्टे ॥ यथेति ॥ तथा तथाविषयीकारि । तत्साम्यादिति ॥ वस्तुसाम्यादित्यर्थः । असतां वाक्यं कुतो वैषम्यहेतुरित्यत आह ॥ स्वर्गेति ॥ यद्यस्मात् । नान्यदस्तीत्यस्यार्थद्वयमाह ॥ न मन्यन्त इति ॥ अनुगतिः प्राप्तिः । क्रियाबाहुल्यसन्तताम् एतत्प्रतिपादिकाम् । जन्मेत्यस्यार्थो बह्विति । अन्त इत्यभिप्रायमात्रम् । नान्यदस्तीत्याद्यर्थे श्रुतिं चाह ॥ इष्टेति ॥ अन्यच्छ्रेयो भगवज्ज्ञानादि । सुकृते सुकृतप्राप्ये । अनुभूत्वा । भोगानिति शेषः । वेदवादरतत्वमुक्तार्थतया निषिद्धमित्यत्र प्रमाणान्तरं चाह ॥ वेदेति ॥ इष्टापूर्तं वरिष्ठं मन्यमानाः

---

नन्तरं शेषमाह ॥ विषयीकारीति ॥ अन्त इति-कस्य पदस्यार्थ इत्यत आह ॥ अन्त इतीति ॥ उक्तार्थेति ॥ भगवदर्पणबुद्धया निष्कामकर्मानुष्ठानरूपोक्तविरुद्धतया यामिमामित्यादिना निषिद्धमित्यर्थः । इमं भूतलं हीनतरं नरकं

'ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।
जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ॥
निर्णेतृणामभावेन केवलं ज्ञानवर्जिताः ।
ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ॥
यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।
ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥
विशेष एव तेषां तु तदन्येषां विपर्ययः ।
ये तु भागवताचार्यैः सम्यग्यज्ञादि कुर्वते ॥
बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।
दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ॥
यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।
तदन्ये नैव च स्वर्गं यान्ति विष्णुबहिर्मुखाः ॥'

इति नारदीये ॥ ४२-४४ ॥

---

केचन स्वर्गभोगानन्तरमिमं लोकं विशन्ति । केचन हीनतरं विशन्तीत्युक्तम् । तत्स्मृत्या विवृणोति ॥ य इति ॥ संशयात् संशयेन । विषयीकुर्वन्तीति शेषः । श्रद्धादिसद्भावे कथं तत्त्वज्ञानाभावः ? 'श्रद्धावान् लभते ज्ञानम्' इत्यादेरित्यत आह ॥ निर्णेतृणामिति ॥ तत्त्वज्ञानरहितश्रद्धादिकमेवैतत्फलप्रदं चेत्तर्हि कियान् विशेषस्तत्त्वज्ञानिनां भवतीत्यत आह ॥ यैरिति ॥ आधिक्ये चिरं नेति ॥ ब्रह्महत्यादेरप्यधिकपापाचरणेऽप्यल्पकालं यातनां यान्ति । न तु चिरमित्यर्थः । यज्ञादिमात्रेण भगवद्द्वेषिणामपि स्वर्गसिद्धेः किं जिज्ञासादिनेत्यत आह ॥ तदन्येषामिति ॥ विपरीतनिश्चयानामश्वमेधादिभिरपि न स्वर्ग इत्यर्थः । दुर्योधनादीनां द्वेषिणामेव स्वर्गादिदर्शनात् कथमेतदित्यत आह ॥ ये त्विति ॥ तथापि द्वेषिणां स्वर्गप्राप्तिसद्भावात् कथं तदन्येषां विपर्यय इत्युक्तमित्यत आह ॥ तदन्य इति ॥ भागवताचार्यवर्जिततद्द्वेष्यभिप्रायेण तदुक्तमिति भावः । अनेन 'इमं लोकम्' इत्यक्ष-

त्रैगुण्याख्यं विषं यापयन्त्यपगमयन्तीति त्रैगुण्यविषयाः ।
'आश्रित्य वेदांस्तु पुमान् त्रैगुण्यविषहारिणः ।
निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः ॥' इति ।
'सत्त्वं साधुगुणाद्विष्णुरात्मा सन्ततिहेतुतः ।'

इति च । सन्ततविष्णुस्मरणं नित्यसत्त्वस्थत्वम् । परमात्मा मम स्वामीति ज्ञानमात्मवत्त्वम् । तेनैक्यज्ञानं निवारयति । विरुद्धयोगक्षेमेच्छावर्जितः । अन्यथोत्थानादेरप्ययोगात् ॥ ४५ ॥

---

विषयम् । प्रमूढत्वमज्ञत्वमेव । हीनतरमिति त्ववैष्णवाचार्यवद्भगवद्द्वेषिविषयम् । तेषां प्रमूढत्वं मिथ्याज्ञानित्वमित्युक्तं भवति ॥ ४२-४४ ॥

प्रतिज्ञातो ज्ञानोपाय उच्यते ॥ 'त्रैगुण्येति' । तत्र वेदानां त्रैगुण्यविषयत्वात् तान् परित्यज्य निस्त्रैगुण्यो भवेत्यन्यथाप्रतीतिनिरासायाह ॥ त्रैगुण्येति ॥ यापयन्तीत्यस्य प्रापयन्तीत्यन्यथाप्रतीतिनिरासायाह ॥ अपगमयन्तीति ॥ प्रतीत एवार्थः किं न स्यादित्यतः स्वोक्तार्थे स्मृतिसम्मतिमाह ॥ आश्रित्येति ॥ सत्त्वस्थत्वं सात्त्विकत्वं, आत्मवत्त्वं मनस्वित्वमित्यन्यथाप्रतीतिनिरासाय सत्त्वात्मशब्दार्थं स्मृत्यैवाऽह ॥ सत्त्वमिति ॥ सन्ततिः सम्यग्व्याप्तिः । सत्त्वं विष्णुश्चेत् तत्स्थत्वं स्वाभाविकं किं विधीयत इत्यत आह ॥ सन्ततेति ॥ न तदाधारतयाऽवस्थानमात्रमत्र विवक्षितमिति भावः । आत्मा विष्णुश्चेत्तद्वत्त्वं स्वाभाविकं न विधेयमित्यत आह ॥ परमात्मेति ॥ न तु तत्सम्बन्धमात्रमिति भावः । सत्त्वस्थपदेनैवास्यार्थतः प्राप्तत्वात्किं पुनरुच्यत इत्यत आह ॥ तेनेति ॥ सततं विष्णुस्मरणमात्रविधावैक्येनापि तत्स्मरणं प्राप्यते । अत आत्मवत्त्वकथनेन तन्निवार्य यथावत्स्मरणप्रकार उच्यत इति भावः । अप्राप्तप्राप्तिर्योगः । प्राप्तपरिरक्षणं क्षेमः । तदुभयं सर्वेथा

---

वेत्यर्थः ॥ तदुक्तमिति ॥ तदन्येषां विषय इत्युक्तमित्यर्थः ॥ स्वाभाविकं विधीयत इति ॥ तच्चायुक्तमित्यत आहेति योज्यम् । किं विधीयत इति पाठे

'उद्रेकात्पातृराहित्यादनत्वाच्चाखिलस्य च ।
प्रलयेऽप्युदपानोसौ भगवान् हरिरीश्वरः ॥
प्रकृतिर्ह्युदरूपेण सर्वमावृत्य तिष्ठति ।
प्रलयेऽतो लयं प्राहुः सर्वतः सम्प्लुतोदकम् ॥' इति च ।
'यावत्प्रयोजनं विष्णोः सकाशात्साधकस्य च ।
धर्ममोक्षादिकं तावत्सर्ववेदविदो भवेत् ॥
वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितम् ।
ज्ञानात्प्रसन्नश्च हरिर्यतोऽखिलफलप्रदः ॥' इति च ।

सर्वतः संप्लुतोदकेऽप्युद्रिक्तः पालकवर्जितः कालाद्यनश्च यो विष्णुस्तस्माद्यावत्फलं तावत्सर्ववेदेषु विशेषज्ञस्यैव भवतीत्यर्थः । सर्वे

---

त्याज्यमित्यन्यथाप्रतीतिनिरासायाऽऽह ॥ विरुद्धेति ॥ न केवलं शास्त्रविरुद्धविषययोगक्षेमपरित्यागमात्रमत्र विवक्षितम् । अपि तु तदिच्छात्यागोऽपीति भावेनेच्छेत्युक्तम् । प्रतीत एवार्थः किं न स्यादित्यत आह ॥ अन्यथेति ॥ उत्थानादीनामप्यप्राप्तप्राप्तिरूपत्वेन योगत्वात् । ततश्च 'योगमातिष्ठोत्तिष्ठ' इत्यादिविरोध इति भावः ॥ ४५ ॥

त्रैगुण्यनिवृत्त्यर्थं वेदाश्रयणं कार्यमित्यत्र युक्तिरुच्यते 'यावानिति'। तत्रोदपानशब्दं, सर्वतः संप्लुतोदकशब्दं च स्मृत्यैव व्याचष्टे ॥ उद्रेकादिति ॥ सर्वकार्याणां प्रलये लीनत्वात् कथं सर्वतः संप्लुतोदकशब्दार्थतया प्रलयो गृह्यत इत्यत आह ॥ प्रकृतिरिति ॥

समस्तश्लोकं स्मृत्या व्याचष्टे ॥ यावदिति ॥ साधकस्य सम्भवतीति शेषः । वेदज्ञानेन कुतो विष्णुः फलं ददातीत्यत आह ॥ वेदेति ॥ अस्तु वेदार्थज्ञानं नाम विष्णुज्ञानम् । तथापि कुतो भगवान् फलं ददातीत्यत आह ॥ ज्ञानादिति ॥

वाक्यद्वयसिद्धं श्लोकार्थमेकीकृत्य दर्शयति ॥ सर्वत इति ॥ नन्वत्र कश्चिदुद्रिक्तत्वादिगुणः श्रूयते । स विष्णुरिति कुतः ? अन्योपि किं न

---

तु यथाश्रुतमेव ॥ अस्येति ॥ तद्वशत्वस्येत्यर्थः ॥ योगमातिष्ठोत्तिष्ठेत्यादि-

हि विष्णोरन्ये प्रलयकाले नोद्रिक्ताः। ये चोद्रिक्ता मुक्ता रमा च तेऽपि न पालकवर्जिताः। विष्णुपाल्यत्वात्। न च मुक्ताः कालादि-चेष्टकाः। न चोद्रिक्तत्वं तेषां तद्वत्। अतः उद्पानो विष्णुरेव। प्रलये विशेषतोऽपि।

'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनाऽस। तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।' 'आपो वा इदमग्रे सलिलमासीत्' 'सलिल एको द्रष्टाऽद्वैतो भवति।' इत्यादि-श्रुतिभ्यः ॥ ४६ ॥

---

स्यादित्यत आह॥ सर्वे हीति॥ मुक्तानां रमायाश्चोद्रिक्तत्वात् कथ-मुद्रिक्तत्वेन विष्णुत्वनिश्चय इत्यत आह॥ ये चेति॥ मुक्तानामुद्रिक्त-त्वेऽपि पालकवर्जितत्वाभावेनोद्पानत्वासम्भव इति भावः। मुक्ता-नामुद्पानत्वासम्भवे हेत्वन्तरं चाह॥ न चेति॥ रमायाः सर्वाभि-मानित्वेन कालादिचेष्टकत्वादसङ्ग्रहः। किञ्चोद्रिक्तत्वं तेषामङ्गीकृतमेव न तु मुख्यतोस्त्यतो न तेषामुद्पानत्वमित्याह॥ न चेति॥ अनेन रमाया अपि चेष्टकत्वमनुमतमेवेति ज्ञायते। उद्रिक्तत्वादेरन्यत्रासम्भवेऽपि किमित्यत आह॥ अत इति॥ किञ्चोद्रिक्तत्वाद्येवान्यत्र न सम्भवति। किमुत सर्वतः सम्प्लुतोदके। अतोऽप्युद्पानो विष्णुरेवेत्याह॥ प्रलय इति॥

मास्त्वन्येषामसम्भवात् सर्वतः सम्प्लुतोदकेऽप्युद्पानत्वम्। विष्णो-रपि तत्सम्भवः कुत इति चेत्परिशेषादिति ब्रूमः। श्रुतिभ्यश्चेत्याह॥ आनीदिति॥ तदेकं ब्रह्म वायुप्रेरणां विना स्वसामर्थ्येनैव कालादिकं प्रेरयति स्म। तस्मादन्यदुत्तमं वस्तु किञ्चन नाऽस। अपि तु तदेवोद्रिक्त-मास। अपरं तमः प्रकृतिरस्मिन् सर्वस्मिन् देशेऽविज्ञातं सलिलं

---

विरोध इति॥ चतुर्थाध्यायोक्तगीतावाक्यविरोध इत्यर्थः॥ असङ्ग्रह इति॥ न च मुक्ता इति वाक्य इति योज्यम्। पर इति श्रवणादुक्तमपरमिति।

कर्माधिकारिण एव त्वदादयो जीवाः, फलं तु मदायत्तमिति भावः। मा कर्मफलहेतुर्भूर्नेश्वरोऽहमिति भावं कुरु । 'एष उ एव शुभाशुभैः कर्मफलैरेनं संयोजयति न स्वयं संयुक्तो भवति। यदेनं कर्मफलैः संयोजयति न स्वयं संयुक्तो भवति तस्मादन्य एवासौ भगवान् वेदितव्यः' इति पैङ्गिश्रुतिः ॥ ४७ ॥

---

भूत्वाऽसीत्। तेन सलिलेन प्रलये सर्वं गूढमासीदित्यर्थः। अस्याग्रे सलिले समन्तात्पालकवर्जितो भगवानासीदित्यर्थः । अद्वैतः सर्वोद्रिक्तः ॥ ४६ ॥

ऐक्यभावनं न कार्यमित्यत्र हेतुरुच्यते 'कर्मणीति'। तत्रार्जुनस्य कर्मकरणे किञ्चित्सामर्थ्यमस्ति, न तु फलापादन इत्येवोच्यते। तत्कथमनेन सर्वजीवानामीश्वराभेदाभावः साध्यत इत्यत आह ॥ कर्मेति ॥ नात्र त इत्युर्जुन एव गृह्यते। अपि तु सर्वजीवाः। तेषां फलापादनासामर्थ्यमुक्त्वा ईश्वरे तत्सामर्थ्यमभिप्रेयते। तेनात्रोक्तैवाभेदाभावे युक्तिरिति भावः। नन्वत्रास्त्वेतावदभिप्रेतम्। तथापि प्रतिज्ञाया अभावादभेदाभावे युक्तिरियमुक्तेति कथं ज्ञायत इत्यत आह ॥ मा कर्मेति ॥ फलहेतुरीश्वरः स मा भूर्मनसेत्यर्थः। अत्र श्रुतिं चाह ॥ एष इति ॥ स्वयं जीवः ॥ ४७ ॥

---

सर्वमिदमित्यस्य वचनव्यत्ययेनार्थोक्तिरस्मिन् सर्वस्मिन्निति । अप्रकेतमविज्ञातम्। आः इत्यस्यार्थ आसीदिति। इदमग्र इत्यस्यार्थोऽस्याग्र इति। प्रपञ्चस्याग्र इत्यर्थः । आप इत्यस्यार्थः पालकवर्जित इति। बहुवचनं शब्दस्वाभाव्यात्। अकारदैर्घ्यं छान्दसम्। आङ्पूर्वको वा। प्रकृतानुगुणतयाऽर्थमाह ॥ सर्वोद्रिक्त इति ॥ सर्वापेक्षयोद्रिक्त इत्यर्थः। त इत्युपलक्षणमिति भावेनाह ॥ सर्वे जीवा इति ॥ प्रतिज्ञाया अभावादिति ॥ ऐक्यभावना न कार्येति प्रतिज्ञाया अभावादित्यर्थः । तदविनाभावयुक्तेरिति भावः । भावनाभावप्रतिज्ञालाभार्थमाह ॥ मनसेत्यर्थ इति ॥ इत्युक्तमिति ॥ दूरेणेति

सङ्गं फलस्नेहम् ॥ ४८ ॥

बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ—

'अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः ।
तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ॥
कृपणास्ते तमस्यन्धे निपतन्ति न संशयः ।
न तेषामुत्थितिः क्वापि नित्यातिशयदुःखिनाम् ।
गुणभेदविदां विष्णोर्भेदाभेदविदामपि ।
देहकर्मादिषु तथा प्रादुर्भावादिकेऽपि वा ॥
स्वोद्रिक्तानां तदीयानां निन्दां कुर्वन्ति येऽपि च ।
सर्वेषामपि चैतेषां गतिरेषा न संशयः ॥'

इति नारदीये ॥ ४९ ॥

---

कर्माकरणे स्नेहो माऽस्त्वित्युक्तम् । किं तर्हीत्यत उच्यते 'योगस्थः' इति । तत्र कर्मसङ्गं त्यक्त्वा कर्माणि कुर्विति व्याहतमित्यत आह ॥ सङ्गमिति ॥ न सङ्गपदेन कर्मसम्बन्धोऽभिधीयते । येन व्याहतिः । अपि तु फलस्नेह एवेति भावः ॥ ४८ ॥

ज्ञानात्कर्माधममित्युक्तम् । तर्हि ज्ञानस्योत्तमत्वात् ज्ञानावस्थायामीश्वरैक्यभावनं युक्तमित्याशङ्कापरिहारायोच्यते बुद्धाविति । तत्रैतच्छङ्कापरिहारः कथमुक्त इत्यत आह ॥ बुद्धाविति ॥ अस्मिन्नेवार्थे स्मृतिसम्मतिं दर्शयंस्तयैवोत्तरपादमपि व्याचष्टे ॥ अज्ञानामिति ॥ फलहेतुपदव्याख्यानं 'तं ये स्वैक्येन' इत्यादि पूर्ववत् । कृपणाः कृपाविषयाः । तत्र हेतुमाह ॥ तमसीति ॥ ४९ ॥

---

पूर्वार्ध इति योज्यम् । पूर्ववदिति ॥ मा कर्मफलहेतुर्भूरित्यत्रेव मनसा मन्यन्त इति योज्यमित्यर्थः । तथाचैक्यभावनां ये कुर्वन्तीत्यर्थलाभ इति भावः । यद्वा फलहेतुपदेन कथमैक्यभावनालाभः । येन तस्येदं व्याख्यानमित्यत आह ॥ पूर्ववदिति ॥ मा कर्मफलहेतुर्भूरितिवदित्यर्थः । फलहेतुरीश्वरः । ये

यथावद्विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कर्मकौशलमेव योगः। भगवज्ज्ञानमेव बुद्धिः॥ ५०॥ ५१॥

निर्वेदं नितरां लाभम्।

बुद्धिमोहो यदा न स्यादन्यथाज्ञानलक्षणः।
श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानवः॥

---

नन्वस्तु ज्ञानस्याधिक्यं, ततश्च किमित्यतः 'तस्मात्' इति ज्ञानसाधनमापाद्यमित्युक्तम्। तत्रास्तु ज्ञानसाधनापादनम्। किं फलस्नेहरहितकर्मणेत्याशङ्कायां फलस्नेहरहितकर्मैव ज्ञानसाधनमिति वक्तव्यम्। किमर्थमत्र कर्मकौशलस्य ज्ञानसाधनत्वमुच्यत इत्यतः फलस्नेहराहित्यादियुक्तकर्मैव कर्मकौशलपदेनोच्यत इति भावेनाह॥ यथावदिति॥ 'योगस्थः' इत्यत्र भगवज्ज्ञानस्यापरिगृहीतत्वादत्रापि न तदभिप्रेतमित्यत आह॥ भगवदिति॥ एतच्छ्लोकार्थविवरणात्मकोत्तरश्लोके 'बुद्धियुक्तः' इति भगवज्ज्ञानस्यापरोक्षज्ञानसाधनत्वेन गृहीतत्वादत्र पूर्वत्रापि तदभिमतमिति भावः॥ ५०॥ ५१॥

कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्यत उच्यते यदेति। तत्र निर्वेदपदेन वैराग्यमुच्यत इत्यन्यथाप्रतीतिनिरासायाह॥ निर्वेदमिति॥ एतच्छ्लोकद्वयं स्मृत्यैव व्याचष्टे॥ बुद्धीति॥ श्रोतव्यश्रुतपदं सर्वकर्मोपलक्षकम्। समाधानेन श्रुत्यर्थज्ञाननिश्चलत्वेनापरोक्षज्ञानं भवति। अनेन 'समाधावचला' इति समाधौ सत्यपरोक्षज्ञानं

---

मनसा फलहेतवो भवन्तीत्यर्थः। फलहेतुरीश्वरोऽहमिति मन्यमाना इति पूर्ववदित्यर्थः। कृपाया अविषयास्त इत्यर्थः। यद्वा कृपां प्रति विषयाः शोच्या इत्यर्थः। भाष्यमवतारयितुं बुद्धियुक्त इति श्लोके तस्मादित्युत्तरार्धमवतारयति॥ नन्विति॥ योगाय युज्यस्वेत्यस्यार्थो ज्ञानमापाद्यमिति॥ राहित्यादीत्यादिपदेन भगवज्ज्ञानादिग्रहः। इत्यत्रेति॥ श्लोके त्यागसमत्वयोरेव योगशब्दार्थत्वेनोक्त्या भगवज्ज्ञानस्य योगशब्दार्थत्वेनापरिग्रहादित्यर्थः॥ अत्रापि॥ बुद्धियुक्त इति श्लोकेऽपीत्यर्थः॥ अपरोक्षेति॥ मनीषिपदोक्तापरोक्षेत्यर्थः॥ पूर्वत्रेति॥

श्रुतिमार्गं प्रपन्ना तु तदर्थज्ञाननिश्चला ।
समाधानेन तु पुनरापरोक्ष्याच्च निश्चला ॥
विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुते ।

इति च । श्रुतौ विशेषेण प्रतिपन्ना ॥ ५२ ॥ ५३ ॥

का भाषा ? कथं भाष्यते ? कैर्गुणैः ? समाधिस्थस्य विषमबुद्धिवर्जितस्य ॥ ५४ ॥

'सर्वकामनिवृत्तिस्तु जानतो न कथञ्चन ।
अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते ॥
अपरोक्षदृशोऽपि स्याद्यदा नास्त्यपरोक्षदृक् ।
क्वचिद्विरुद्धकामोऽपि यथाऽयुध्यद्गुरो हरिम् ॥

---

तेन विष्णावचलेति व्याख्यातं भवति । तद्योगं भगवद्योगम् । भगवद्योगस्य सर्वेषामपि विद्यमानत्वात् को विशेष इत्युक्तं विवृणोति ॥ मुक्त इति ॥ तदश्नुते ब्रह्माप्नोतीत्यर्थः । अत्रापि यदा तदेति सम्बध्यते । नन्वत्र 'श्रुतिविप्रतिपन्ना' इति श्रुतिविरुद्धत्वमुच्यते । तत्कथं श्रुतिमार्गं प्रपन्नेति व्याख्येत्यत आह ॥ श्रुताविति ॥ ५२ ॥ ५३ ॥

प्रकृतज्ञानिलक्षणादिप्रश्नः क्रियते स्थितेति ॥ तत्र 'का भाषा' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ केति ॥ ननु ज्ञानीति भाष्यत इति सिद्धत्वात्किं प्रश्नेनेत्यत आह ॥ कैरिति ॥ 'समाधिस्थस्य' इत्यस्य समाधिं कुर्वतो ज्ञानिनो लक्षणादि पृच्छतीत्यन्यथाप्रतीतिनिरासार्थमाह ॥ समाधीति ॥ ५४ ॥

ज्ञानिलक्षणमुच्यते प्रजहातीति ॥ तत्र ज्ञानिनः सर्वकामप्रहाणं नाम निषिद्धानिषिद्धसर्वकामप्रहाणमित्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे ॥ सर्वेति ॥ कुतो न ज्ञानिनः सर्वकामनिवृत्तिः, यतः सर्वशब्दसङ्कोचः क्रियत इत्यत आह ॥ अपरोक्षेति ॥ ज्ञानिनः कदाचि-

---

एतच्छ्लोकार्थविवरणपूर्वकं बुद्धिमोहतरणपदोक्तं ज्ञानफलमुच्यते ॥ श्रुतीति ॥ योगस्थ इति श्लोकेऽपीत्यर्थः ॥ अत्रापि यदा तदेति सम्बन्ध इति ॥ श्रुतिमार्गमिति

अतोऽनभिभवो यावद् दृशस्तावन्निगद्यते ।
स्थितप्रज्ञस्तथाप्यस्य कादाचित्क्यपि या दृशिः ॥
नियमेनैव मोक्षाय भवेद्योग्या भवेद्यदि ।
अयोग्या भक्तिजाता चेत्क्रमान्मुक्त्यै भवेत्तथा ॥

इति च । आत्मनि विष्णौ । आत्मना विष्णुना । तत्प्रसादादेव तुष्टः ॥ ५५ ॥

रसो रागः ॥ ५९ ॥

---

न्निषिद्धकामनिवृत्तिरपि नास्ति । कुतः सर्वकामनिवृत्तिरित्यर्थः । तर्हि ज्ञानस्याभिभवकाले ज्ञानिलक्षणाभावाज्ज्ञानित्वाभावः प्रसज्यत इत्यतः सत्यमित्याह ॥ अत इति ॥ निषिद्धकामराहित्यस्य ज्ञानानभिभवकाल एव सत्त्वादित्यर्थः । ननु यदि कदाचिद् दृशिरभिभूयते तर्हि सा न मोक्षसाधनं स्यात् । कादाचित्कतया दौर्बल्यादित्यत आह ॥ तथापीति ॥ योग्या स्वबिम्बविषया । 'आत्मन्येवात्मना' इत्यात्मशब्दौ जीवमनःपरावित्यन्यथाप्रतीतिनिरासायाह ॥ आत्मनीति ॥ कुतो न जीवादिपरावित्यत आह ॥ तुष्ट इति ॥ अत्रात्मस्थित्यादिना तुष्ट्यभिधानाज्जीवस्थित्यादिना तदसम्भवान्न तत्परावात्मशब्दाविति भावः ॥ ५५ ॥

एतादृशं चेज्ज्ञानं तर्त्कि सर्वे न साधयन्तीत्यतो निराहारत्वेनेन्द्रियजयस्तेनैव ज्ञानमित्यतिदुःसंपादत्वं ज्ञानस्योच्यते 'विषया' इति । तत्र रसशब्दस्यापूर्वमर्थमाह ॥ रस इति ॥ ५९ ॥

वीतरागेत्यादिना रागादिराहित्यं ज्ञानिलक्षणमुक्तम् । जिज्ञासुना च तत्साध्यम् । कारणफलपरिज्ञाने च रागादित्यागो भवति । अतो रागादिपरिहाराय तत्कारणफले उच्येते 'ध्यायत' इति । तत्र संमोह-

---

स्मृतावपीत्यर्थः । तुष्टपदस्य मूलेऽनुवादो व्यर्थ इत्यतस्तस्य कृत्यमाह ॥ कुतो न जीवादिपरावित्यादिना ॥ कारणफलपरिज्ञाने चेति ॥ परम्परया नरकाद्यनर्थफलपरिज्ञाने च भीत्या तत्कारणरागादित्यागबुद्धिर्भवति । तत्त्यागश्च परम्परया ध्यानादितत्कारणत्यागेन भवति । तत्त्यागश्च तज्ज्ञाने सति भवत्यतो रागादि-

संमोहान्मिथ्याज्ञानात् ज्ञातमप्यन्यथा स्मर्यते । वाक्यार्थानामन्यथास्मरणान्निर्णीतं ज्ञानमपि नश्यति ॥ ६३ ॥

शान्तिर्भगवन्निष्ठा । 'शमो मन्निष्ठता' इति हि भागवते ॥६६॥

'देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यन्न दृश्यते ।
निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते ॥

---

स्मृतिविभ्रमपदाभ्यां विपरीतज्ञानमेवोच्यते । अतः कथं हेतुहेतुमद्भाव इत्यत आह ॥ संमोहादिति ॥ अत्र संमोहपदेन परवित्तापहरणाद्यधर्मे धर्मबुद्धिरित्यादिमिथ्याज्ञानमुच्यते । स्मृतिविभ्रमपदेन च परवित्तापहरणादेरधर्मत्वाभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथास्मरणमुच्यते । तयोश्च हेतुहेतुमद्भावस्सम्भवतीति भावः । स्मृतिभ्रंशाद्बुद्धिनाश इति दुर्घटम् । चेतनस्य बुद्ध्यविनाभावित्वेन बुद्धेर्नाशायोगादित्यत उक्तं विवृण्वन्नाह ॥ वाक्येति ॥ निर्णीतं केवलवाक्यसापेक्षतां विनापि निश्चितम् । न तु ज्ञानमात्रमिति भावः ॥ ६३ ॥

इन्द्रियजये जाते मनसः स्वतोऽपि प्रायो विषयागतिलक्षणेन प्रसादेन मोक्षलाभादस्यावापाद्य इत्युक्तम् । तदनापादने दोषश्चोच्यते नास्तीति । तत्र भावनायाः शान्तिसाध्यत्वात् 'न चाभावयतः शान्तिः' इति कथमुच्यत इत्यतो न शान्तिपदेनात्र चित्तनिरोध उच्यते । अपि तु भगवन्निष्ठबुद्धित्वम् । तच्च भावनासाध्यं भवतीति भावेन शान्तिशब्दार्थं सप्रमाणकमाह ॥ शान्तिरिति ॥ ६६ ॥

पिण्डीकृत्योक्तलक्षणमुच्यते या निशेति । तत्र सर्वप्रेरकाणां देवानामपि ज्ञानित्वाज्ज्ञानिनां परमात्मेतरादर्शने लोकयात्रोच्छेदः स्यादित्यतस्तद्वाक्यं देवेतरज्ञानिविषयतया स्मृत्यैव व्याचष्टे ॥ देवेभ्य इति ॥ 'यथाऽन्यैः' इत्यनेन पूर्वार्धतात्पर्यमुक्तं भवति । यथाज्ञैर्ब्रह्म न

---

कारणफले द्वाभ्यामाहेत्यर्थः । निर्णीतमित्यनुवादः केवलेत्यादि व्याख्या ॥ उक्तलक्षणमिति ॥ प्रजहातीति श्लोकचतुष्टये विक्षिप्योक्तं लक्षणं पिण्डी-

आश्चर्यवस्तुदृग् यद्वद् व्यक्तमन्यन्न पश्यति ।
ऐकाग्र्याद्वा सुखोद्रेकाद्देवाः सूर्यवदेव च ॥
प्रायशः सर्ववेत्तारस्तत्रापि ह्युत्तरोत्तरम् ।'

इति ब्रह्मतर्के ॥ ६९ ॥

'भुञ्जानोऽपि हि यः कामान् मर्यादां न तरेत् क्वचित् ।
समुद्रवद्धर्ममयीं नासौ कामी स मुच्यते ॥
केति कुत्सितवाची स्यात्कुत्सितं मानमेव तु ।
कामो मोक्षविरोधी स्यान्न सर्वेच्छा विरोधिनी ॥'

इति च । न च सर्वेच्छाभावे जीवनं भवति ।

'शान्तिर्मोक्षो यतो ह्यत्र विष्णुनिष्ठा भवेद् ध्रुवा ।'

इति च ॥ ७० ॥

---

ज्ञायत इत्यर्थः ॥ सूर्यवदिति ॥ सूर्यो यथा स्वतेजसा सर्वं प्रकाशयत्येवं स्वज्ञानेन सर्वं विषयीकुर्वन्तीत्यर्थः ॥ ६९ ॥

एवं ज्ञानी सर्वत्रोदासीनश्चेत्कथं विषयभोगस्तस्येत्यत उच्यते आपूर्यमाणमिति । तत्स्मृत्यैव व्याचष्टे ॥ भुञ्जान इति ॥ धर्ममयीं धर्माख्याम् । विषयभोक्ता न कामी कथमुच्यत इत्यत उक्तस्य 'न कामकामी' इत्यस्यार्थो नासाविति । ननु कामाभावे विषयभोगासम्भवात् कथं ज्ञानिनः कामाभावो मोक्षसिद्ध्यर्थमुच्यत इत्यतोऽत्र कामपदेन निषिद्धेच्छैवात्राभिप्रेता । तस्या एव मोक्षविरोधित्वात् । नेच्छामात्रं तस्य मोक्षाविरोधित्वादित्याह ॥ केति ॥ कुत्सितेयमिति मानं यद्विषये सैवेच्छा काम इत्यर्थः । इतश्च 'न कामकामी' इत्यत्र नेच्छामात्रनिषेध इत्याह ॥ न चेति ॥ ननु शान्तिशब्दस्य भगवन्निष्ठावाचित्वात् कथं स मुच्यत इति व्याख्येत्यतो भगवन्निष्ठासम्बन्धादेव मोक्षोऽपि शान्तिशब्दाभिधेय इति स्मृत्यैवाह ॥ शान्तिरिति ॥ ७० ॥

पूर्वश्लोकोक्तं प्रपञ्चयते विहायेति । तत्र कामपदेन यदीच्छा गृह्यते तर्हि निःस्पृह इति पुनरुक्तिः । यदि विषयास्तर्हि विषयत्यागे किं

निषिद्धस्पृहाभावमात्रेण सर्वविषयान् विहाय ।
'अस्वरूपे स्वरूपत्वमतिरेव ह्यहङ्कृतिः ।
त्याज्या सर्वत्र ममता ज्ञात्वा सर्वं हरेर्वशे ॥'

इति च ॥ ७१ ॥

ब्राह्मी ब्रह्मविषया । ज्ञानिनामप्यन्तकालेऽन्यमनसां प्रारब्धकर्मभावाज्जन्मान्तरम् । प्रारब्धकर्मनाशकाले नियमेन भगवत्स्मृति-

---

भक्षयति । निःस्पृहत्वं च कथं युज्यते । सर्वकामनिवृत्तिरिति वचनविरोधात् । जीवनाद्यभावप्रसङ्गाच्चेत्यत आह ॥ निषिद्धेति ॥ सर्वकामपदेन विषयाणां ग्रहणान्न पुनरुक्तिदोषः । नापि चरणासम्भवः । अत्र निःस्पृह इत्यनेन विषयाणां स्वरूपतो हानमन्तरेण स्पृहाभावमात्रेण हानस्याभिप्रेतत्वात् । नापि स्मृतिवचनादिविरोधः । निःस्पृह इति निषिद्धविषयस्पृहाभावस्य विवक्षितत्वादिति भावः । ननु ज्ञानिनामप्यहं ममेति प्रत्ययप्रयोगदर्शनात् कथं तस्योच्यते निरहङ्कारत्वादीत्यतो नाहमित्यादिज्ञानादिमात्रमहङ्कारादीति भावेन स्मृत्यैवाहङ्कारादिशब्दार्थमाह ॥ अस्वरूप इति ॥ ममता मदधीनमिति भावना ॥७१॥

उक्तलक्षणमुपसंह्रियते एषेति । तत्र ब्राह्मीति ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह ॥ ब्राह्मीति ॥ ननु 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादेर्ज्ञानमात्रेण सर्वकर्मणां क्षयाज्ज्ञानानन्तरमेव मोक्षसद्भावेन 'स्थित्वाऽस्याम्' इत्यन्तकाले भगवत्स्मृत्यादिविधानं ब्रह्मप्राप्त्यर्थं किमिति क्रियत इत्यत आह ॥ ज्ञानिनामिति ॥ ज्ञानिनामपि यद्यन्तकाले भगवत्स्मरणादि नास्ति तर्हि जन्मान्तरमेव भवति । न ब्रह्मप्राप्तिरतस्तदर्थमन्तकाले तत्स्मरणादिविधानं युक्तमेव । न च ज्ञानिनः क्षीणकर्मत्वाज्जन्मान्तरायोगः । ज्ञानमात्रेणाप्रारब्धकर्मनाशेऽपि येषामन्तकालेऽपि न भगवत्स्मरणं तेषां प्रारब्धकर्मभावादिति भावः ।

---

कृत्योच्यत इत्यर्थः । इति वचनविरोधादिति ॥ सर्वकामनिवृत्तिस्तु ज्ञानतो न कथञ्चनेति प्रागुक्तवचनविरोधादित्यर्थः ॥ उक्तेति ॥ प्रजाहातीत्यादिनोक्त-

भवति । ततो मोक्षश्च । 'यं यं वाऽपि स्मरन् भावम्' इति हि वक्ष्यति । बाणं शरीरम् ।

'अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते ।
भिन्नदेहाभावतो वा स सहस्रशिरा अपि ॥'

इति च ॥ ७२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-तात्पर्यनिर्णये द्वितीयोऽध्यायः ॥ २ ॥

---

यदि मोक्षार्थं साक्षादन्तकाल एव भगवत्स्मृत्याद्यपेक्षितं तर्हि तस्य दुःसम्पादत्वेन कस्यापि मोक्षो न स्यात् । अतः साक्षादन्तकालस्मरणं नात्र भगवतोऽभिप्रेतमित्यत आह ॥ प्रारब्धेति ॥ न मोक्षार्थमन्तकाल-स्मरणापेक्षायां कस्यापि मोक्षप्रसङ्गः । प्रारब्धकर्मण एवान्तकालस्मरण-प्रतिबन्धकत्वेन तन्नाशेऽन्तकाले स्मरणनियमात् । तद्भावे च मोक्ष-नियमादिति भावः । नन्वन्तकालस्मरणादेव मोक्षो नान्यथेति भगवदभि-मतमिति निश्चयो यदि भवेत्तदैवमर्थकल्पना भवेत् । स एव कुत इत्यत आह ॥ यं यमिति ॥ 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यादेर्निर्वाणशब्दस्य मोक्षेऽपि प्रसिद्धेर्ब्रह्म निर्वाणमिति कथं सामानाधिकरणम् । न च ब्रह्म निर्वाणं चेति योजना । ब्रह्मप्राप्त्यतिरिक्तमोक्षानिरूपणादित्यत आह ॥ बाणमिति ॥ बाणशब्दस्य शरीरवाचित्वान्निर्वाणपदेन कार्यब्रह्मव्यावृत्त्यर्थं ब्रह्मणोऽशरीरत्वमेवोच्यते । न मोक्ष इति भावः । ननु कथमशरीरत्वं

---

ज्ञानिलक्षणमित्यर्थः ॥ दुःसम्पादनत्वेनेति ॥ कष्टसाध्यत्वेनेत्यर्थः । ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खलिति खलन्तः ॥ तद्भावे चेति ॥ स्मरणाभावे चेत्यर्थः ॥ कार्यब्रह्मेति ॥ विरिञ्चिव्यावृत्त्यर्थमित्यर्थः । तस्यापि 'स एनान् ब्रह्म गमयति' इत्यादौ 'कार्यं बादरिः' इति सूत्रोक्तदिशा नपुंसकब्रह्म-

ब्रह्मणः । सहस्रशीर्षेत्यादिविरोधादित्याशङ्कां स्मृत्यैव परिहरति ॥ अभावादिति ॥ ७२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥



---

शब्दवाच्यत्वात् परब्रह्मप्राप्तेरेव मोक्षरूपत्वादिति भावः ॥

इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वितीयोऽध्यायः ॥ २ ॥



# ॥ अथ तृतीयोऽध्यायः ॥

हरिः ॐ। ज्ञानं योगश्चोक्तौ। तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन।

'दूरेण ह्यवरं कर्म' इति प्रश्नबीजम् ॥ १ ॥ २ ॥

---

पूर्वाध्यायसङ्गतत्वेनैतदध्यायार्थं दर्शयितुं पूर्वाध्यायप्रतिपाद्यमाह ॥ ज्ञानमिति ॥ 'एषा तेऽभिहिता' इत्यन्तेन ज्ञायत इति ज्ञानमीश्वरादिस्वरूपं निरूपितम्। ततोऽध्यायपरिसमाप्तिपर्यन्तं तत्स्वरूपज्ञानोपायश्चोक्तः पूर्वाध्याय इत्यर्थः। तत्सङ्गतत्वेनैतदध्यायार्थमाह ॥ तत्रेति ॥ तयोर्ज्ञानयोगयोर्मध्ये योगोऽपि द्विविधो भवति। कर्मध्यानयोगभेदात्। तत्र प्रागुक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन भगवानित्यर्थः ॥ ननु 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा' इत्यादिना पूर्वत्रापि कर्मयोगस्य प्रपञ्चितत्वात् किमनेनाध्यायेनेत्यत उक्तम् ॥ विशेषत इति ॥ नन्वत्रापि 'इन्द्रियाणि पराणि' इत्यादिना ज्ञानस्याप्युक्तेः कथं कर्मयोगं प्रपञ्चयतीत्युच्यत इत्यतो वाऽह ॥ विशेषत इति ॥ प्राचुर्येणेत्यर्थः।

ननु कर्मणः सकाशाद्बुद्धेर्ज्यायस्त्वं प्राक् कुत्रोक्तम्? यद्बीजोऽयं 'ज्यायसी चेत्कर्मणः' इत्यर्जुनप्रश्न इत्यत आह ॥ दूरेणेति ॥ १-२ ॥

---

हरिः ॐ ॥ इत्यन्तेनेत्यस्य निरूपितमित्यन्वयः। न त्वेवाहमित्यादिना ग्रन्थेनेत्यपि योज्यम्। कर्मणि ल्युडिति भावेनाह ॥ ज्ञायत इति ॥ ईश्वरादीत्यादिपदेन प्राधान्येन प्रकृतस्य जीवस्य प्रासंगिकवेददेशकालादेश्च ग्रहः। ईश्वरस्यापि युद्धगतत्वेन येषामनित्यत्वशंका तान्प्रति तस्यापि नत्वेवाहमित्यादिना प्राधान्येन प्रकृतत्वाद्योगे त्विमां शृण्विति प्रतिज्ञापूर्वं त्रैगुण्यविषया वेदा इत्यादिनेश्वरज्ञानोपायस्यैवोक्तत्वादीश्वरादीति स्वशब्देन तस्योक्तिः। अत एव तत्स्वरूपज्ञानोपायश्चोक्त इत्युक्तम् ॥ कर्मध्यानयोगेति ॥ कर्मरूपज्ञानोपाय-

*

ज्ञानप्रचुरो योगो ज्ञानयोगः । कर्मप्रचुरोऽन्यः ।
'साङ्ख्या ज्ञानप्रधानत्वाद्देवाश्च यतयस्तथा ।
मुख्यसाङ्ख्यास्तत्र देवा ज्ञानमेषां महद्यतः ॥
बहुकर्मकृतोऽप्येते ततोऽपि बहुवेदनात् ।
मुख्यसाङ्ख्या इति ज्ञेयास्तदन्ये कर्मयोगिनः ॥
ज्ञानिनोऽप्यतिबाहुल्यात्कर्मणः कर्मयोगिनः ।
नोभयं तद्विना कश्चित्पुमान् हि पुरुषार्थभाक् ।

'लोकेऽस्मिन्' इति परिहारवाक्ये केषाञ्चिदधिकारिणां ज्ञानमेव केषाञ्चित् कर्मैवानुष्ठेयमुच्यत इत्यन्यथाप्रतीतिनिरासायाह ॥ ज्ञानेति ॥ नात्र ज्ञानयोगपदेन ज्ञानमात्रं विवक्षितं, कर्मयोगपदेन च कर्ममात्रमुच्यते । किन्तु प्रत्येकमुभयम् । तर्ह्युभावपि ज्ञानकर्मयोगाविति वक्तव्यौ । कथं कश्चिज्ज्ञानयोगः कश्चित्कर्मयोग उच्यत इति चेन्न । एकैकत्र ज्ञानकर्मणोः प्राचुर्याभिप्रायेणाल्पजलमिश्रेऽपि क्षीरे क्षीरशब्दप्रयोगवत् प्रयोगोपपत्तेरिति भावः ।

साङ्ख्यानां ज्ञानमेव योगिनां कर्मैवेति प्रतीत एवार्थः किं न स्यादिति चेत्तथाऽङ्गीकारे स्मृतिविरोधः स्यादिति भावेनाह ॥ साङ्ख्या इति ॥ देवानां बहुकर्मसद्भावात्कथं मुख्यसाङ्ख्यत्वमित्यत आह ॥ बह्विति ॥ ततोऽपि कर्मणोऽपि । गृहस्थादीनामपि किं केवलकर्मैवेत्यपेक्षायामाह ॥ ज्ञानिनोऽपीति ॥ तर्हि कथं कर्मयोगिन इत्यत आह ॥ अतीति ॥ साङ्ख्यानां केवलं ज्ञानमेव योगिनां केवलं कर्मैवेति किं न स्यादित्यत आह ॥ नोभयमिति ॥ साङ्ख्यानां ज्ञानेन योगिनां कर्मणा पुरुषार्थो भवतीति श्रुत्यादौ श्रूयते । न चैकैकेन पुरुषार्थो युज्यते । अतो नैकैकग्रहणं युक्तमिति भावः । कर्माभावे कुतो न पुरुषार्थ इति चेत्किं कर्मपदेन कर्ममात्रं विवक्ष्यते अथ यज्ञादिकर्म वा । आद्यं

ध्यानरूपज्ञानोपायभेदादित्यर्थः । नोभयं विनेत्यादि निषेधस्य प्रसक्तिमाह ॥ सांख्यानां ज्ञानेनेति ॥ तरति शोकमात्मवित् अपाम सोमममृता अभूमेत्यादि-

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥
न च ज्ञानं विना कर्म पुरुषार्थकरं भवेत् ।"

इति ब्रह्मवैवर्ते ।

निष्ठा पर्यवसितिर्मुक्तिः ।

"ज्ञानिनो मोक्षनियमस्तथापि शुभकर्मणा ।
आनन्दवृद्धिरन्येन ह्रासो ज्ञानं तु कर्मणा ॥"

---

दूषयति ॥ न हीति ॥ द्वितीयं दूषयति ॥ न चेति ॥ ज्ञानमात्रं कर्म विना संसारनिवृत्तिसाधनमपि न सम्पूर्णपुरुषार्थकरमिति भावः । तर्ह्यस्तु केवलं कर्मैव पुरुषार्थकरमित्यत आह ॥ न चेति ॥ 'न कर्मणा न प्रजया' इत्यादिश्रुतिविरोधादिति भावः । अनेन 'न कर्मणामनारम्भात्' इत्यादेश्च तात्पर्यमुक्तं भवति । भवेदत्र ज्ञानकर्मणोः समुच्चयकल्पनं, यद्यत्र साङ्ख्ययोगादेः पुरुषार्थहेतुत्वमुच्येत । एकैकस्य पुरुषार्थसाधनत्वाभावोक्तेः न च तदत्रोच्यत इत्यत आह ॥ निष्ठेति ॥ ष्ठा गतिनिवृत्ताविरयतो निष्ठा पर्यवसितिः । गतेरिति शेषः । कथमनेन चोद्यपरिहार इत्यत आह ॥ मुक्तिरिति ॥ अत्र निष्ठापदेन गतिपर्यवसितिवाचिना संसारगतिपर्यवसानं मुक्तिरभिप्रेतेत्यर्थः । नन्वेवं ज्ञानकर्मभ्यां मोक्ष इत्यङ्गीकारे 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिश्रुतिविरोधः स्यादित्यत आह ॥ ज्ञानिन इति ॥ ज्ञानकर्मभ्यां

---

श्रुतौ ज्ञानयोगेन सांख्यानामित्यादिस्मृतौ चेत्यर्थः ॥ न हीतीति ॥ कर्ममात्राभावोऽसंभवीति भावः ॥ न संपूर्णेति ॥ मुक्तौ स्वयोग्ययावदानंदानुभवरूपेत्यर्थः । तस्य ज्ञानोत्तरकर्मसचिवज्ञानसाध्यत्वादिति भावः । तदेव वाक्यमन्यथाऽपि योजयति ॥ तर्ह्यस्त्विति ॥ अनेनेति ॥ न च ज्ञानं विनेत्यादिकथनेनेत्यर्थः । अस्मिँल्लोके संसारे ज्ञानेन सांख्यानां कर्मणा योगिनां निष्ठा नितरां स्थितिर्न तु मुक्तिरिति भ्रांतः शंकते ॥ भवेदत्रेत्यादिना ॥ न च तदत्रेति ॥ समुच्चयस्य पुरुषार्थहेतुत्वमित्यर्थः ॥ चोद्येति ॥ भवेदित्यादिना

इति परमश्रुतेः 'न कर्मणा न प्रजया धनेन' इत्यादिविरोधो न ।

अन्यथा 'न कर्मणामनारम्भात्' इत्याद्युभयसमवाक्यशेषविरोधश्च । समत्वं च 'न हि कश्चित्' इत्यादेः । 'नान्यः पन्था' इत्यपि ज्ञानमृते न मोक्ष इत्येवाऽह ॥ ३ ॥ ४ ॥

'कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता ।
विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता ॥'

इति पैङ्गिश्रुतेः 'कार्यते ह्यवशः' इत्यत्रावशो विष्णुवशः । 'अः इति ब्रह्म, इत्यादि श्रुतेः ॥ ५-८ ॥

---

मोक्षसिद्ध्यङ्गीकारेऽपि नैतच्छ्रुतिविरोधः । कर्मरहितज्ञानमात्रस्य मोक्षसाधनत्वाभिधानात् । अस्माभिरपि तदङ्गीकारात् । कर्मणस्तु ज्ञानमात्रेणैव सिद्धे मोक्षे सुखाधिक्यहेतुत्वेनाङ्गीकारात् । ज्ञानादेव मोक्षः कर्मणा आनन्दवृद्धिरित्येतत् कुत इति चेत् ज्ञानिन इति श्रुतेरेवेति भावः ।

इतश्च 'ज्ञानयोगेन' इत्यत्र कर्मापि संयोज्यम् । न ज्ञानमात्रमित्याह ॥ अन्यथेति ॥ अन्यथा ज्ञानमात्रेणैव पुरुषार्थाङ्गीकारे । कर्मयोगिनामपि प्रकृतत्वात्तेषां कर्मानारम्भे पुरुषार्थासम्भवाभिधायकमेतद्वाक्यं किं न स्यादित्यत उक्तम् ॥ उभयेति ॥ न केवलमेतत्कर्मयोगिविषयमपि तूभयविषयमित्यर्थः । कुतोऽस्योभयविषयत्वं ज्ञायत इत्यत आह ॥ समत्वं चेति ॥ मोक्षे कर्मणा आनन्दवृद्धिर्भवतीत्ययुक्तम् । 'नान्यः पन्था' इति श्रुतौ कर्मणो मोक्षसम्बन्धस्यैव निराकरणादित्यत आह ॥ नान्य इति ॥ ज्ञानायोगमेवेयं श्रुतिर्व्यवच्छिनत्ति । न तु कर्मसम्बन्धं निराकरोति । तथात्वे 'ज्ञानिनो मोक्षनियमः' इति श्रुतिविरोधादिति भावः ॥ ३ ॥ ४ ॥

कार्यत इत्यत्र स्वतन्त्रकर्तुरन्यस्याप्रतीतेः प्रकृतिगुणानामेव स्वतन्त्रकर्तृत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह ॥ कर्तृत्वमिति ॥ अत्र गुणानां विकारकर्तृत्वमेवोच्यते । न तु स्वतन्त्रकर्तृत्वम् । अवश

'कर्मणा बध्यते जन्तुः' इत्यादिकमप्यवैष्णवकर्मविषयमित्याह ॥ यज्ञार्थादिति ॥

'ज्ञो नाम भगवान् विष्णुस्तं यात्युद्देश एष यः ।
स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः ॥'

इति बर्कश्रुतिः ॥ ९ ॥

'जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः ।
स यज्ञात्कर्मणः सोऽपि समस्तं कर्म केशवात् ॥
स नित्योऽप्यक्षरततिरूपाद्वाक्याद्धि गम्यते ।
वाक्यमुच्चार्यते भूतैस्तान्यन्नात्तच्च मेघतः ॥

---

इति विष्णोः स्वतन्त्रकर्तृत्वोक्तेः । अवशपदेन स्वानधीनत्वं गृहीत्वा गुणानां स्वतन्त्रकर्तृत्वमेव किं न गृह्यत इति चेन्न । 'कर्तृत्वम्' इति श्रुतिविरोधादिति भावः । श्रुतिरिति कुत्रचित्पाठः । तत्रान्यथाप्रतीतिनिरासाय श्रुत्यैव व्याख्यातं विष्णोः स्वतन्त्रकर्तृत्वमत्र न प्रतीयत इत्यत उक्तम् ॥ अवश इति ॥ अवशपदं कथं विष्णुवशत्वं वक्तीत्यत आह ॥ अः इति ॥ ५-८ ॥

ननु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्मणो बन्धकत्वात्कथं 'कुरु कर्म' इति विधीयत इत्याशङ्कापरिहाराय श्लोकमवतारयति ॥ कर्मणेति ॥ अयज्ञार्थं कर्म बन्धकमित्येवात्र प्रतीयते, न त्ववैष्णवं कर्म बन्धकमित्यतो यज्ञशब्दार्थं श्रुत्यैवाह ॥ ज्ञ इति ॥ नात्र यज्ञ पदेन प्रसिद्धयज्ञ उच्यते । अपि तु यातो विषयीकृतो ज्ञानरूपत्वाज्ज्ञो भगवान् येनोद्देशेन स एवेत्यर्थः । य एष उद्देश इति योजना ॥ ९ ॥

कर्म कर्तव्यमित्यत्र हेत्वन्तरमुच्यते 'अन्नादिति'। अत्र कथमन्नस्य पर्जन्याद्देवविशेषादुत्पत्तिः । कथं च तस्य यज्ञादुत्पत्तिः । कथं चान्नादिति परम्पराया एवोक्तत्वात् चक्रमित्युच्यत इत्याशङ्कां परिहर्तुं

---

कृतचोद्येत्यर्थः ॥ स्वानधीनमिति ॥ जीवानधीनमित्यर्थः ॥ ज्ञानरूपत्वादिति ॥ स्वरूपस्यैव सर्ववस्तुज्ञत्वादित्यर्थः । इगुपधज्ञाप्रीकिरः क इति कर्तर्येव कप्रत्ययविधानात् ॥ हेत्वंतरमिति ॥ सहयज्ञा इत्यादिश्लोकचतुष्टयोक्तार्थवाद-

तस्मात्सर्वगतो विष्णुर्नित्यं यज्ञे प्रतिष्ठितः ।
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
स पापो विश्वहन्तृत्वान्नरके मज्जति ध्रुवम् ॥
वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ।
वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्गृहिणोऽखिलः ॥
शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ।
विद्याभयादिदानं च सर्वेषामपि सम्मतम् ॥

ब्रह्माक्षरशब्दयोरन्यार्थकल्पनां च निराकर्तुं स्मृत्यैव व्याचष्टे ॥ जनना-दिति ॥ परं जन्यं यस्यासौ तथोक्तः ॥ यज्ञादिति ॥ यज्ञसमाराधित-देवताया भवतीत्यर्थः । यज्ञो देवतोद्देशेन द्रव्यपरित्यागः । कर्म तदितरक्रिया । वाक्याज्जायते । कथं नित्यो जायते? गम्यते अवगम्यत इत्यर्थः । वेदेन यथावदवगत एवेश्वरः सत्कर्म कारयतीति भावः । यत एवं परम्परया यज्ञाभिव्यङ्ग्यस्तस्मात् । भगवतो यज्ञे प्रतिष्ठितत्वाद्य-ज्ञानुष्ठानेन चक्रप्रवृत्तौ भगवदभिव्यक्तिनिमित्तं च सुकृतं भवति, न केवलं भूतस्थितिहेतुत्वनिमित्तमिति भावः ॥ चक्रं नानुवर्तयतीति ॥ कर्म न करोतीत्यर्थः ।

विश्वस्य चक्रान्तर्भावात्कर्माकरणेन चक्राप्रवृत्तौ विश्वहन्तृत्वं चेत् गार्हस्थ्येतराश्रमानुष्ठानं प्रसज्येत । कर्मणां यज्ञदानतपोरूपेण त्रैविद्या-दाश्रमान्तरे च यज्ञाद्यभावादित्यत आह ॥ वाचिक इति ॥ वाचिकः स्वाध्यायादिः । मानसो ध्यानादिः ॥ विशेषत इति ॥ सर्वसाधारण्येऽपि अन्येषामन्येऽपि सन्त्येषामयमेवेत्यर्थः । अन्येषां यज्ञान्तरमाह ॥ वनस्थस्येति ॥ अक्रतुः पश्वालम्भनहीनः । शुश्रूषाद्यात्मक इत्यादि-पदेनाग्निपूजा । विद्याभयादीत्यादिपदेन स्वभोक्तव्यान्नदानम् । अन्न-

रूपहेतुश्चक्रप्रवर्तकत्वरूपहेत्वंतरमित्यर्थः ॥ अन्यार्थकल्पनां चेति ॥ ब्रह्माक्षर-शब्दयोर्वेदपरब्रह्मार्थताकल्पनमित्यर्थः ॥ स्मृत्युक्त योगं शब्दारूढं दर्शयति ॥ परमिति ॥ उत्तममित्यर्थः । परपदांतलोपो निरुक्तत्वादिति भावः ॥ हेत्वंत-

गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् ।
सर्वैः कार्यं तपो घोरमिति सर्वे त्रिकर्मिणः ॥'

इति नारदीये ।

ब्रह्माक्षरशब्दार्थयोर्व्यत्यासे 'तस्मात्सर्वगतं ब्रह्म' इति प्रत्यभिज्ञाविरोधश्चक्राप्रवेशश्च ॥ १४ ॥ १५ ॥ १६ ॥

---

पूर्वकं विद्याभयादिदानम् । स्वभोक्तव्यादधिकमापाद्यान्नदानमिह विवक्षितम् । अन्नं तु मूलफलादि ।

'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यत इत्यपव्याख्यानं हेत्वन्तरेण प्रत्याख्याति ॥ ब्रह्मेति ॥ यद्यत्र ब्रह्मपदेन वेदोऽक्षरपदेन ब्रह्मोच्यते तर्हि उपरि ब्रह्मणः 'तस्मात्सर्वगतं ब्रह्म' इति ब्रह्मपदेन प्रत्यभिज्ञा न स्यात् । यत्पदेन यन्न प्रकृतं तस्य तत्पदेन कारणविशेषं विना परामर्शादर्शनात् । न च तत्र वेदपरामर्शः । तस्य यज्ञे प्रतिष्ठितत्वोक्तेरनुपयुक्तत्वादिति भावः । दोषान्तरं चाह ॥ चक्रेति ॥ वेदात्कर्मणामुत्पत्त्यभावाद्ब्रह्मणो वेदस्योत्पत्त्यभावात् भूतेभ्यो ब्रह्मणो जननाभावादर्थान्तरकल्पने वेदादेश्चक्राप्रवेशः स्यात् । व्यक्त्यर्थाङ्गीकारे बहूनां पदानाममुख्यार्थतापात इति भावः ॥ १४ ॥ १५ ॥ १६ ॥

कर्म कर्तव्यमित्यत्र युक्त्यन्तरमुच्यते ॥ यस्त्विति ॥ तत्र सन्तोषस्तृप्तिरापूर्तिरित्यादेस्तृप्तिसन्तोषशब्दयोरेकार्थत्वात 'आत्मतृप्तः'

---

रेणेति ॥ व्याख्यानरूपस्मृतिविरोधापेक्षया प्रत्यभिज्ञाविरोधरूपहेत्वंतरेणेत्यर्थः ॥ अनुपयुक्तत्वादिति ॥ स्वपक्षे तूक्त उपयोग इति भावः ॥ उत्पत्त्यभावादिति ॥ वेदस्य नित्यत्वादिति भावः ॥ भूतेभ्य इति ॥ चक्रसिध्यर्थमक्षरं भूतोद्भवमिति वाच्यम् । न ह्यक्षरशब्दितं ब्रह्म भूतैरुत्पद्यत इत्यर्थः ॥ अर्थांतरकल्पन इति ॥ परमेश्वरवाक्यभूताद्वेदाख्यात् ब्रह्मणः पुरुषाणां कर्मणि प्रवृत्तिः । ततः कर्मनिष्पत्तिः । ततः पर्जन्यः । ततोऽन्नम् । ततो भूतानि । भूतानां च कर्मप्रवृत्तिरित्येवं कल्पन इत्यर्थः । आदिपदेन परब्रह्मग्रहः । नन्वक्षरं भूतसंभवमित्येवास्तु । संभवशब्देन व्यक्तिर्गृह्यतामित्यत आह ॥ व्यक्त्यर्थेति ॥

तृप्तिसन्तोषशब्दयोः पर्यायत्वेऽपि परमात्मना तृप्तः, परमात्मनि तृप्त इति विशेषः ।

'विष्णुप्रसादाद्रतिमान् तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचरः ॥' इत्याग्नेये ।
'रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता ।
प्रीतिस्तु द्विविधः स्नेहः कर्मजो निज एव च ॥'

इति शब्दनिर्णये ।

'सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः ।'

इत्यभिधाने ॥ १७ ॥ १८ ॥

---

इत्युक्तत्वात् 'आत्मन्येव च सन्तुष्टः' इति पुनरुक्तिरित्यत आह ॥ तृप्तीति ॥ विशेषोऽर्थ इति शेषः । कुत एवमर्थकल्पनेत्यतः श्लोकं स्मृत्यैव व्याचष्टे ॥ विष्णिवति ॥ एवं तृप्तिसन्तोषशब्दयोरेकार्थत्वमङ्गीकृत्य विग्रहभेदेनार्थभेद उक्तः । अथ तृप्तिसन्तोषशब्दयोरेवार्थभेदाच्च न पुनरुक्तिरिति भावेन तयोरर्थभेदे प्रमाणमाह ॥ रतिरिति ॥ आनन्दः स्वरूपभूतः । कर्मज उपकारादिजातः । रतितृप्तिप्रीतिशब्दानां भिन्नार्थत्वे किमायातं तृप्तिसन्तोषशब्दयोरर्थभेदे इत्यतः प्रीतिसन्तोषशब्दयोः पर्यायत्वात् तृप्तिप्रीतिशब्दयोरर्थभेदे तृप्तिसन्तोषशब्दयोरर्थभेदः सिद्ध एवेति भावेन तत्पर्यायत्वे प्रमाणमाह ॥ सन्तोष इति ॥ पर्यायवाचकाः पर्यायेण वाचकाः ॥ १७ ॥ १८ ॥

ननु मुक्तस्य कार्यं न विद्यत इत्युक्त्वा 'तस्मादसक्तः' इत्युच्यते । तत्र कर्मकरणे हेतोरनुक्तत्वात् 'तस्मात्' इति किं परामृश्यत इत्यत आह ॥ यस्मादिति ॥ यथा मुक्तस्य प्रयोजनाभावात्कार्याभावः एवं मुमुक्षोरपि कर्मणा प्रयोजनाभावात्कार्याभावः किं न स्यादित्यत उच्यते ॥ असक्त इति ॥ तत्र कर्मणैव मोक्षप्राप्तिरुच्यत इत्यन्यथाप्रतीति-

---

अर्थभेदाच्चेति ॥ कृतकृत्यत्वप्रीतिरूपार्थभेदाच्चेत्यर्थः । कर्मैवाचरन्नित्यर्थाभिप्रायेणाह ॥ कर्मणैव मोक्षेत्यादिना ॥ उक्तत्वादिति ॥ सहयज्ञा इत्यादि न

यस्मादमुक्तस्य कार्यमस्त्येव तस्मादसक्तः । असक्त आचरन्नेव यस्मात्परमाप्नोति । मुक्तस्यैव कार्यं नास्तीत्येवकारार्थोऽपि 'यस्तु' इति तुशब्देनावगतः । 'तस्मात्कर्म समाचर' इत्युपसंहारविरोधश्चान्यथा ।

'ब्रह्मनिष्ठा ब्रह्मरता ब्रह्मज्ञानसुतर्पिताः ।
पाण्डवानां च मुक्तानामन्तरं किञ्चिदेव हि ॥'

निरासाय तद्व्याचष्टे ॥ असक्त इति ॥ कर्माऽऽचरन्नेवेत्येवार्थो न तु कर्मैवाचरन्निति भावः । तस्मादमुक्तस्य कर्मणा फलसद्भावादस्त्येव तस्य कार्यमिति वाक्यशेषः ।

नन्वमुक्तस्य कार्यमस्तीत्यनुक्तत्वात्कथं तस्मादिति तत्परामर्शः स्यादिति चेन्न । मुक्तस्यैव कार्यं नास्तीत्युक्त्याऽमुक्तस्य कार्यमस्तीति प्राप्तत्वात् । ननु मुक्तस्यैव कार्यं नास्तीत्येवकाराभावात् कथममुक्तस्य कार्यसद्भावप्राप्तिरित्यत आह ॥ मुक्तस्यैवेति ॥ एवकाराभावेऽपि तदर्थावधारणस्य तुशब्देनावगतत्वात् तेनामुक्तस्य कार्यसद्भावः प्राप्यत इति भावः ।

केचित्तु 'यस्तु' इति वाक्यं ज्ञानिमात्रविषयतया व्याकुर्वते । न तद्युक्तम् । 'यस्त्वेवात्मरतो मुक्तो' 'विष्णुप्रसादाद्रतिमान्' इत्यादिस्मृत्या मुक्तिविषयतया गृहीतत्वात् ज्ञानिनामपि कार्यसद्भावस्योक्तत्वाच्चेत्यभिप्रेत्य दोषान्तरं चाह ॥ तस्मादिति ॥ यद्यत्र ज्ञानिमात्रस्य कार्याभावोऽभिप्रेतः स्यात्तर्ह्यर्जुनं प्रति 'तस्मादसक्तः' इत्युपसंहारवाक्ये कर्मविधानं विरुद्धं स्यात् । तस्यापि ज्ञानित्वादिति भावः ।

अर्जुनस्य ज्ञानित्वे प्रमाणाभावेनाज्ञत्वात् कर्माधिकारित्वमेवातस्तं प्रति कर्मविधानं न विरुद्धमित्यत आह ॥ ब्रह्मेति ॥ ये तेषामिति योज्यम् । मुक्तविषयत्वेऽप्यस्यार्जुनं प्रति कर्मविधानं विरुद्धम् ।

कर्मयोगेन योगिनामित्यादिना वेति भावः । पूर्वोत्तरार्धयोस्संगतत्वायाह ॥ तेषामिति योज्यमिति ॥ हेत्वंतरमुच्यत इति ॥ आचारापेक्षया लोक-

इति भविष्यत्पर्ववचनाच्च नार्जुनस्यामुख्याधिकारिता । आत्मरतिरेव स्यादित्येवशब्देन मुक्तानामेभ्यो विशेषो दर्शितः । एषां कदाचिद्दुःखाभासस्यापि भावात् ॥ १९ ॥

'सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।
ज्ञाननिष्ठा अपि ततः कार्यं वर्णाश्रमोचितम् ॥' इति च ।
'अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ॥ २० ॥ २१ ॥
'ममैव केवलं नास्ति केनाप्यर्थस्तथाप्यहम् ।
कर्मकृल्लोकरक्षार्यै तस्मात्कुर्वीत मत्परः ॥"

इति कृष्णसंहितायाम् ।

---

पाण्डवानामेतद्वचनबलात् ब्रह्मरतत्वादिमुक्तलक्षणवत्तया मुक्तसाम्यादित्यत आह ॥ आत्मेति ॥ न पाण्डवानां मुक्तानां चातिसाम्यम् । 'आत्मरतिरेव' इति मुक्तानामरतिव्यावर्तकैवशब्देन पाण्डवेभ्यो विशेषप्रतीतेरित्यर्थः । मुक्तानां दुःखाभावेऽपि कथं पाण्डवेभ्यो विशेष इत्यत आह ॥ एषामिति ॥ १९ ॥

ननु ज्ञानादेव मोक्षसिद्धेः कथमसक्तः कर्माऽऽचरन्नेव परमाप्नोतीत्युक्तमित्यत उच्यते ॥ कर्मणैवेति ॥ तत्र कर्मणैव मोक्ष उच्यत इत्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे ॥ सहैवेति ॥ कार्यं कर्म ज्ञानिनामपीति शेषः । कर्म कर्तव्यमित्यत्र हेत्वन्तरमुच्यते ॥ लोकेति ॥ तत्र लोकसङ्ग्रहसम्भवेऽपि तेन प्रयोजनाभावात्कथं ज्ञानिनो लोकसङ्ग्रहार्थं कर्म विधीयत इत्यतो लोकेत्यादिश्लोकान् स्मृत्यैव व्याचष्टे ॥ अज्ञानमिति ॥ सा तुष्टिः ॥ २० ॥ २१ ॥

किञ्च प्रयोजनमात्ररहितेनापि मया केवलानुग्रहेण लोकसङ्ग्रहार्थं कर्म क्रियते, अतो मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वक्तव्यमित्युक्तं 'न मे पार्थ' इति । अस्यार्थो ममैवेति ॥ नन्वीश्वरः

'रक्षया वाऽथ सृष्ट्या वा संहृत्यादेर्न तु क्वचित् ।
अर्थो विष्णोस्तथाप्येष स्वभावात्सर्वकर्मकृत् ॥
मत्तो नृत्तादिकं यद्वत्कुर्यात्सुखविशेषतः ।
परमानन्दरूपत्वात् कुर्याद्विष्णुस्तथैव तु ॥'

इति बर्कश्रुतिः ॥ २२-२६ ॥

'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ॥

---

प्रयोजनाभावेऽपि लोकरक्षादि करोतीति न युज्यते । प्रयोजनाभावे प्रवृत्त्ययोगादित्याशङ्कां श्रुत्यैव परिहरति ॥ रक्षयेति ॥ प्रयोजनाभावेऽपीश्वरस्य कर्तृत्वस्वभाववत्त्वात् रक्षादिकर्मकरणं युक्तमित्यर्थः । ननु तादृशस्वभावत्वेन प्रवृत्तिरचेतनेष्वेव दृष्टा । यथा दहनपवनादीनां प्रयोजनं विना स्वभावादेव दहनगमनादिप्रवृत्तिः । चेतनप्रवृत्तेः प्रयोजनहीनाया अदर्शनात्कथमीश्वरस्यापि प्रयोजनानुद्देशेन प्रवृत्तिरित्यत आह ॥ मत्त इति ॥ २२-२६ ॥

अज्ञवदाग्रहेण ज्ञानिनामपि कर्म कार्यं चेद्विद्वदविद्वत्कर्मणोरविशेषप्रसङ्ग इत्यतः 'सक्ताः' इति सक्त्यसक्तिपूर्वकत्वविशेष उक्तः प्रपञ्च्यते 'प्रकृतेरिति'। विद्वदविद्वत्कर्मविशेषमुक्त्वा विद्वत्कर्मकरणं विधीयते 'मयि' इति । तत्र कर्माणि संन्यस्य युध्यस्वेति व्याहतमित्यतः तत्स्मृत्यैव व्याचष्टे ॥ नाहमिति ॥ 'नाहं कर्ता' इति निर्ममत्वम् । 'हरिः कर्ता तत्पूजा कर्म चाखिलम्' इति हरौ कर्मन्यासः । हरिरेव

---

संग्रहरूपहेत्वंतरमित्यर्थः । इत्यस्येत्यस्येति द्वयमपि समानाधिकरणम् (?) ॥ सक्त्यसक्तिपूर्वकत्वविशेष उक्त इति ॥ सक्ता इति श्लोक इति ज्ञेयम् । संन्यस्येत्यस्य त्यक्त्वेत्यर्थं मत्वाऽऽह ॥ व्याहतमिति ॥ निर्ममत्वमिति ॥ नाहं

यस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव च नान्यगम् ।
तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ॥
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥'

इति ब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च विभागेन ज्ञातव्यं सर्वत्र ।

---

कर्ता चेत्कथं तत्पूजेत्यादिनिरूपणं युक्तमित्यत आह ॥ तथापीति ॥ यद्यपि हरिरेव कर्ता, तथापि तत्प्रेरणेनैव ममापि कर्तृत्वात् तत्पूजेत्यादिनिरूपणं युक्तमिति भावः । तद्भक्तिरिति निराशीस्त्वम् । तत्फलं पूजाफलम् । कर्मन्यासो निर्ममत्वादियुक्तः विष्णोस्तृप्तिकर इत्यनेन 'ये मे मतम्' इत्यादेस्तात्पर्यमुक्तं भवति । एवं निर्ममत्वादियुक्तेन हरौ कर्मन्यासेन कुतो विष्णोस्तृप्तिरित्यत आह ॥ यस्मादिति ॥ यस्मादेवमर्थस्थितिः तस्मात्तथा भावनं विष्णोस्तृप्तिकरं भवत्येव । यथार्थज्ञानप्रियत्वाद्विष्णोरिति भावः ।

स्वतन्त्रकर्तृत्वमेव कर्तृत्वम्, अतः कथं जीवादेः कर्तृतोच्यत इत्यतः परतन्त्रादिकर्तरि कर्तृशब्दप्रयोगं दर्शयति ॥ पुमानिति ॥ ननु क्वचिदीश्वर एव कर्ता न जीवादिरित्युच्यते । क्वचिज्जीव एव कर्ता नेश्वरादिरिति । क्वचिच्च प्रकृतिरेव कर्त्री नेश्वरादिरिति । अतः कथमीश्वर एव कर्ता, नाहम्, अहं तु तदधीनकर्तेति कर्मन्यासाद्युपपद्यत इत्यत आह ॥ इतीति ॥ यत्रेश्वरादीनां कर्तृत्वमुच्यते तत्रेश्वरस्य स्वतन्त्रकर्तृत्वमित्यादि विभागेनैव ज्ञातव्यम् । यत्रेश्वरादीनामकर्तृत्वमुच्यते

---

कर्तेत्यनेन निर्ममत्वं व्याख्यातमित्यर्थः । मत्कृता पूजेत्यनन्तरं शेषमाह ॥ तत्पूजेत्यादिनिरूपणं युक्तमिति ॥ तद्भक्तिरित्यनेन निराशीस्त्वं व्याख्यातमित्यर्थः । कर्मन्यास इत्यस्य विशेषणमाह ॥ निर्ममत्वनिराशीस्त्वयुक्तः इति ॥

'क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।
क्वचित्प्रकृष्टकर्तृत्वाद्भगवान् प्रकृतिर्हरिः ॥'

इति शब्दनिर्णये ।

"स्वभावतस्त्रिधा जीवा उत्तमाधममध्यमाः ।
उत्तमास्तत्र देवाद्या मर्त्यमध्यास्तु मध्यमाः ॥

---

**तत्रेश्वरस्य परतन्त्रकर्तृत्वमस्वकीयं नास्तीत्यादि विभागेनैव ज्ञातव्यं, न तु यत्र कर्तृत्वमुच्यते तत्र सर्वेषां स्वतन्त्रकर्तृत्वमेव । यत्राकर्तृत्वमुच्यते तत्र सर्वेषां सर्वथा कर्तृत्वराहित्यं ज्ञातव्यम् । स्वतन्त्रकर्तृत्वं विष्णोरेवेत्यादिवचनादेवेत्यर्थः ।**

**'प्रकृतेः' इत्यादि व्याकरिष्यन् तत्रस्थप्रकृतिशब्दादीन् स्वभावादिपरतया व्याख्यातुं तदर्थत्वे प्रमाणं तावदाह ॥ क्वचिदिति ॥ स्वभावो जीवस्य । मयीत्यादिवाक्यव्याख्यानरूपाया 'यस्मात्स्वतन्त्रकर्तृत्वम्' इत्यादिस्मृतेः 'प्रकृतेः' इत्यादिवाक्यव्याख्यानोपयोगित्वात् व्यत्यासेन व्याख्यानम् ।**

**प्रकृतेरित्यादावीश्वरादित्रयस्य कर्तृत्वाभिधानात् पुनर्जीवस्याकर्तृत्वाभिधानात् कर्तृत्वादिविभागस्य स्मृतावुक्तत्वात् प्रकृतेरित्याद्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे ॥ स्वभावत इति ॥ अत्र 'स्वभावतः'**

---

इत्यादि विभागेनेति । यत्र जीवस्यैव कर्तृत्वमुच्यते तत्र पराधीनकर्तृत्वं, यत्र प्रकृतेरेव कर्तृत्वमुच्यते कार्यते ह्यवशः कर्म सर्वैः प्रकृतिजैर्गुणैरित्यादौ तत्र विकाररूपकर्तृत्वमिति ध्येयमित्यर्थः । नास्तीत्यादि विभागेनेति ॥ यत्र जीवस्याकर्तृत्वमुच्यते कर्तृत्वं न कर्माणि इत्यादौ तत्र स्वकीयं स्वतन्त्रकर्तृत्वं नास्ति, यत्र तु प्रकृतेः कर्तृत्वं नेत्युच्यते तत्र ज्ञानेच्छापूर्वककर्तृत्वं नास्तीत्येवंरूपेण ज्ञेयमित्यर्थः । प्रकृतेरित्यादिव्याख्यानपरं स्वभावत इत्यादिस्मृत्यनन्तरं यस्मादिति स्मृतिः पठनीया । व्याख्येयगीतावाक्यानुसारादित्यत आह ॥ मयीत्यादीत्यादिना ॥ उपयोगित्वादिति ॥ यस्मादिति स्मृत्युक्तत्रिविधकर्तृत्वस्य प्रकृतेरिति वाक्येऽभिमतत्वादिति भावः । व्याख्यानोपयोगं व्यनक्ति ॥ प्रकृतेरित्यादाविति ॥ अहंकारेत्युत्तरार्धेनेति योज्यम् । इत्यादीत्यस्य पीठिका-

अधमा असुराद्याश्च नैषामस्त्यन्यथाभवः ।
शरीरमात्रान्यथात्वे स्वजातिं पुनरेष्यति ॥
उत्तमा मुक्तियोग्यास्तु सृतियोग्यास्तु मध्यमाः ।
अपरेऽन्धतमोयोग्याः प्राप्तिः साधनपूर्तितः ॥
पूर्त्यभावेन सर्वेषामनादिः संसृतिः स्मृता ।
नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया ॥
अतोऽनुवर्तते नित्यं संसारोऽयमनादिमान् ।
अतोऽधमानां जीवानां मिथ्याज्ञानादयोऽखिलाः ।
स्वाभाविकगुणा ज्ञेया मध्यमर्त्येषु मिश्रिताः ॥

---

इत्यादि साक्षाद्व्याख्यानाय पीठिकारचनम् । देवादीनामन्यथाभावसद्भावात्कथं देवत्वादिः स्वभाव इत्यत आह ॥ नैषामिति ॥ जयादीनामन्यथाभावदर्शनात्कथं नास्तीत्यत आह ॥ शरीरेति ॥ देवत्वादेः स्वाभाविकत्वेऽपि देवा एवोत्तमा इत्यादि कुत इत्यत आह ॥ उत्तमा इति ॥ फलस्योत्तमत्वादिना देवादीनामुत्तमत्वादिसिद्धिरिति भावः । देवादीनां मुक्त्यादियोग्यत्वे किमर्थं ते संसारे वर्तन्त इत्यत आह ॥ प्राप्तिरिति ॥ स्वयोग्यफलस्येति शेषः । पूर्त्यभावेन साधनस्येति शेषः । साधनपूर्तितः प्राप्तिश्चेत् नित्यं संसारानुवृत्तिर्न स्यात् । अनादित्वात् संसारस्येतः पूर्वमेव साधनपूर्तिसम्भवेन सर्वचेतनानां परिसमाप्तेरित्यत आह ॥ नैवेति ॥ नित्यकाले संसारोऽनुवर्ततामिति हरीच्छया अनादिमान् यद्यपीति शेषः । स्वभावतस्त्रिधा जीवाश्चेत् किं तत इत्यत आह ॥ अत इति ॥ देवत्वादेः स्वाभाविकत्वात्तदनुसारिगुणाश्च स्वाभाविका इत्यर्थः । मिश्रिताः स्वाभाविका इत्यादि योज्यम् । ततश्च किमित्यत

---

रचनमित्यन्वयः । कार्यते ह्यवशः कर्मेत्यादिना साक्षाद्व्याख्यानायेत्यर्थः ॥ जयादीनाम् ॥ जयविजयादीनां हिरण्याक्षरावणादित्वादिरूपेणान्यथाभावदर्शनादित्यर्थः । मिश्रिता इति ॥ स्वाभाविकतत्त्वज्ञानमिथ्याज्ञानोभयरूपा गुणा इत्यर्थः ॥ इत्यादि योज्यमिति ॥ तत्वज्ञानं स्वाभाविकं, भक्तिः

तत्त्वज्ञानं विष्णुभक्तिरित्याद्या देवतादिषु ।
कार्यते ह्यवशः कर्म सर्वस्तैः प्राकृतैर्गुणैः ।
स्वाभाविकगुणानेतान् हेतुं कृत्वैव विष्णुना ॥
कर्मसु क्रियमाणेषु कर्ताऽहमिति मूढधीः ।
मन्यते तत्त्वविद्विष्णोर्गुणा इच्छादयस्तु ये ॥
स्वाभाविकेषु जीवस्य कामाद्येषु सदैव तु ।
प्रेरकत्वेन वर्तन्ते स्वातन्त्र्यं मम न क्वचित् ॥
इति मत्वा न सक्तः स्यात्प्रीतोऽस्य भवति प्रभुः ।
स्वभावगुणसंमूढा ज्ञानादिगुणवत्तरम् ॥

---

आह ॥ कार्यत इति ॥ अवशो विष्णुवशः । प्राकृतैः स्वाभाविकैः । किञ्चात इत्यत आह ॥ स्वाभाविकेति ॥ अनेनाविद्वत्कर्माभिधायकस्य 'प्रकृतेः' इत्यस्यार्थ उक्तो भवति ॥ स्वाभाविकगुणान् हेतुं कृत्वेति ॥ यस्योत्तमगुणास्तानपेक्ष्य सत्कर्म कारयतीत्यादि । विष्णुना विष्णोरिच्छादिगुणैः । अनेन प्रकृतेर्गुणैरित्यस्यार्थद्वयमुक्तं भवति । उपादानतया सत्त्वादयः प्रकृतिगुणाश्चात्राभिमताः । कर्ता स्वातन्त्र्येणेति शेषः ।

एवमविद्वान् करोति चेत् कथं विद्वानित्यत आह ॥ तत्त्वेति ॥ अनेन तत्त्वविदित्यस्यार्थ उक्तो भवति । अविदुषामहङ्कारे को हेतुरित्यत आह ॥ स्वभावेति ॥ स्वभावगुणानामुत्तमत्वे तेष्वपरप्रेरिता एवैत इति संमूढाः । मिश्रादित्वे तैः संमूढाः । ज्ञानादिगुणसद्भावे ज्ञानादिगुणवत्तरं स्वातन्त्र्येण प्रतिजानत इति योज्यम् । अभावे स एव दोषः ।

---

स्वाभाविकीत्येवं योज्यमित्यर्थः ॥ ततश्चेति ॥ मिथ्याज्ञानादिगुणानां स्वाभाविकत्वतश्चेत्यर्थः ॥ किञ्चात इति ॥ अतश्च किमित्यर्थः ॥ इत्यादीति ॥ यस्य मध्यमगुणास्तानपेक्ष्य सदसत्कर्मणी कारयति यस्याधमा गुणास्तानपेक्ष्यासत्कर्म कारयतीत्यर्थः ॥ विष्णुनेत्यनुवादः विष्णोरित्यादिव्याख्या ॥ तैः संमूढा इति ॥ मिश्रगुणैस्संमूढाः ॥ अभाव इति ॥ ज्ञानादेरिति योज्यम् । विपरिणामेनार्थ-

स्वातन्त्र्येणैव कर्तारं चाऽत्मानं प्रतिजानते ।
तान् गुणान् कर्म तच्चैव विष्णवधीनं न ते विदुः ।
तेष्वयोग्येषु तत्त्वज्ञस्तत्त्वं नातिप्रकाशयेत् ॥
वदेद्विवादरूपेण नोपदेशात्मना क्वचित् ।
सभ्यरूपेण वा ब्रूयात्पृष्टेऽव्यक्तिकृदेव वा ॥
बुद्ध्वाऽप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ।
स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति ॥'

इत्यादि प्रकाशसंहितायाम् ॥ ३५ ॥

परमेश्वराद्देवेभ्यश्चार्वाक्तनं प्रेरकं पृच्छति ॥ अथ केनेति ॥३६॥

---

तान् गुणान् विष्णवधीनान्न विदुः सद्भावे । अभावे न सन्तीति न विदुरिति ज्ञेयम् । ते ज्ञानिना बोध्यन्तामित्यत आह ॥ तेष्विति ॥ अयोग्याश्चेन्न प्रकाशयेत्, अन्यथा परीक्ष्य प्रकाशयेदिति भावः ॥ अव्यक्तिकृदिति ॥ स्ववचनं यथा तत्त्वव्यक्तिकृन्न भवेत्तथेत्यर्थः । अनेन प्रकृतेरिति व्याख्यातं भवति । मन्दानित्यस्यार्थोऽयोग्येष्विति । अयोग्येषु तत्त्वं कुतो न वक्तव्यमित्यत आह ॥ बुद्ध्वेति ॥ मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह ॥ स्वभावमिति ॥ एतेन सदृशमिति व्याख्यातं भवति ॥ ३५ ॥

"तयोर्न वशमागच्छेत्" इत्युक्ते पृच्छयते 'अथ' इति । तत्र 'प्रकृतेः' इत्यादौ भगवतः प्रेरकत्वस्योक्तत्वात्, स्वयं देवत्वेन देवानां प्रेरकत्वस्यापि ज्ञातत्वात्, 'इन्द्रियस्य' इति कामाद्यधमानां प्रेरकाणां च कथितत्वात् सिद्धप्रश्नोऽयमित्यत आह ॥ परमेश्वरादिति ॥

---

माह ॥ विष्णवधीनानिति ॥ स्वभावेति ॥ स्वभावानुगतिचेष्टिताया उपरतिरित्यर्थः । प्रश्नकरणे प्रसक्तिं दर्शयति ॥ तयोरित्यादिना ॥ उक्तत्वादिति ॥ प्रकृष्टकृतिमत्त्वहेतुना हरेरपि प्रकृतिशब्दार्थत्वोक्तेरिति भावः । सिद्धप्रश्नत्व-

"अखिलप्रेरको विष्णुर्ब्रह्माद्यास्तदवान्तराः ।
असुरा अशुभेष्वेव कामादेरभिमानिनः ॥
तत्र कामः कालनेमिः सर्वं धूममलोल्बवत् ।
शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ॥
महाशनस्य तस्येदं नालं तेनानलोऽग्निवत् ।
भुञ्जान इन्द्रियाविष्टो ज्ञानास्त्रेणैव दह्यते ॥"

इति ब्रह्मतर्के ।

---

अर्वाक्तनं बलवन्तमिति शेषः । प्रश्नवाक्ये नैतदुच्यत इत्यत आह ॥ अथेति ॥ आनन्तर्यवाचिनाऽथशब्देन परमेश्वराद्देवेभ्यश्चानन्तरमित्यर्थो ज्ञायत इति भावः ॥ ३६ ॥

'काम एषः' इत्यादिपरिहारवाक्यमुक्तार्थेऽपि संवादरूपस्मृत्यैव व्याचष्टे ॥ अखिलेति ॥ तत्रेति 'कामः' इत्यस्य व्याख्यानम् । कामः प्रबल इति योज्यम् । 'अशुभेषु' इत्यनेनैव 'वैरिणम्' इत्येतद्व्याख्यातं भवति । कथं कामोऽशुभप्रेरकेषु प्रबल इत्यत आह ॥ सर्वमिति ॥ अग्न्यादर्शगर्भान् यथा धूमाद्यावृणोति तथेत्यर्थः ॥ क्रमादिति ॥ शुभजनं धूमोऽग्निमिव किञ्चिदावृणोतीत्यादि द्रष्टव्यम् । कामश्च तदपेक्षितं दत्त्वा जेतव्य इत्यत आह ॥ महाशनस्येति ॥ महदपि दीयतामित्यत आह ॥ तस्येति ॥ अनेन 'धूमेन' इत्यादि व्याख्यातं भवति । तर्हि कथं जेतव्य इत्यतस्तदधिष्ठानं तावदाह ॥ भुञ्जान इति ॥ एतेन 'इन्द्रियाणि' इत्यस्यार्थ उक्तो भवति । अस्त्विदमधिष्ठानं, किमायुधं तद्वधायेत्यत

---

निरासायाह ॥ इति शेष इति ॥ नैतदिति ॥ कामाद्यधमप्रेरकेष्वेव बलवत्प्रेरकप्रश्नो न तूत्तममध्यमप्रेरकेश्वरदेवेष्वित्येतदित्यर्थः ॥ उक्तार्थेऽपीति ॥ परमेश्वरादित्याद्युक्तार्थेऽपीत्यपिशब्दः । श्लोकव्याख्यानसमुच्चयेऽपिशब्दः ॥ काम इत्यस्येति ॥ परिहारश्लोकस्येत्यर्थः ॥ इत्यादीति ॥ आदिशब्दाद्दर्पणे

*

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ॥
एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति ।
इत्यादिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
सर्वं तु घटते विष्णौ यत्कल्याणगुणात्मकम् ॥"

इत्यादि ब्रह्मतर्के ॥ १-१४ ॥

कमलासने ब्रह्मणि स्थितं रुद्रम् ।
"विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।
हरस्याङ्कविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥"

इति पाद्मे ॥ १५-१८ ॥

द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । "नान्तं न मध्यम्" इत्युक्तत्वात् पुनः "अनादिमध्यान्तम्" इति गुणा-

---

यत्कल्याणगुणात्मकं तत्सर्वं प्रतीत्या दुर्घटमपि हरौ परमैश्वर्ययोगतो घटत इत्येवाङ्गीक्रियते न तु जीवैक्यादिकमपीति । तथा सति परमैश्वर्य-स्यैवानुपपत्तेरिति भावः ॥ १-१४ ॥

दृष्टविश्वरूपो दृष्टानुवादव्याजेन स्तौति "पश्यामि" इति । तत्र कमलरूपासने स्थितं ब्रह्माणमित्यल्पार्थत्वप्रतीतिनिरासाय कमलासन-स्थपदं व्याचष्टे ॥ कमलेति ॥ कथं ब्रह्मणो ब्रह्मणि स्थितत्वमित्यतो रुद्रस्येशपदोदितस्येदं विशेषणमिति भावेनाह ॥ रुद्रमिति ॥ भवेदिदं व्याख्यानं यदि रुद्रस्य ब्रह्मणि स्थितत्वं भवेत्, तदेव कुत इत्यत आह ॥ विष्णुमिति ॥ १५-१८ ॥

"द्यावापृथिव्योः" इत्यत्र त्वयेत्युक्त्यैवेकेनेति सिद्धत्वात् किमर्थं पुनरेकेनेत्युच्यत इत्यतस्तस्य सार्थक्यमाह ॥ द्यावापृथिव्योरिति ॥ "अनादिमध्यान्तम्" इति परिमाणानन्त्यमुच्यत इत्यन्यथाप्रतीति-

---

तत्रैव' इत्युक्तत्वादित्यर्थः ॥ तथा सतीति ॥ जीवेनैक्ये सति प्रत्यक्षादि-

नन्त्यापेक्षया । "त्वया ततं विश्वमनन्तरूप" इति कालापेक्षया । स्वयमन्तं विद्यमानमपि न पश्यतीत्याशङ्क्य "त्वया ततं विश्वमनन्तम्" इत्याह । अन्यत् तात्पर्यज्ञापनायाभ्यासरूपम् । "सर्वं

---

निरासायाह ॥ नान्तमिति ॥ अनादिमध्यान्तमित्यत्र परिमाणेतरगुणानन्त्यमेवोच्यते, न तु परिमाणानन्त्यम् । तस्य "नान्तं न मध्यं" इत्यनेनोक्तत्वादित्यर्थः । "त्वया ततं विश्वमनन्तरूप" इत्यत्रानन्तरूपेति पुनरुक्तिरित्यत आह ॥ त्वयेति ॥ तर्हि "नान्तं न मध्यं न पुनस्तवादिं पश्यामि" इति परिमाणानन्त्यस्योक्तत्वात् "त्वया ततं विश्वम्" इति पुनरुक्तिरित्यत आह ॥ स्वयमिति ॥ नान्तं पश्यामीत्युक्ते नेश्वरस्य परिमाणानन्त्यं सिध्यति । विद्यमानमन्तं स्वयं न पश्यतीत्यपि प्रतीतेः । तन्निवृत्त्यर्थं न केवलमहं पश्यामि, किन्तु त्वया ततं विश्वमित्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति भावः । तथापि "पश्यामि त्वां सर्वतोऽनन्तरूपं", 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इत्यादिपुनरुक्तिरित्यत आह ॥ अन्यदिति ॥ एतद्वाक्यजातस्य विष्णोर्देशतः कालतो गुणतश्चानन्त्ये स्वस्य महातात्पर्यज्ञापनायाभ्यासरूपत्वान्न पुनरुक्तिदोष इति भावः । 'अनन्तवीर्यामितविक्रमस्त्वं', 'सर्वं समाप्नोषि' इति पुनरुक्तिशङ्का पूर्वोक्त्यैव गर्भस्रावेण गता । तथापि तस्य प्रयोजनान्तरमाह ॥ सर्वमिति ॥ 'सर्वं खल्विदं ब्रह्म' इत्यादेः सर्वस्य जगतो ब्रह्मात्मकत्वात् 'त्वमस्य विश्वस्य परं निधानम्' इत्याद्ययुक्तमित्याशङ्क्य तच्छ्रुतिगतसर्वशब्दस्य ब्रह्मैवार्थः, सर्वव्याप्तत्वादित्यत्रोच्यते । अतो न पौनरुक्त्यमिति भावः । ननु स्वयमेव

---

विरोधपरिहारायोभयगतधर्मत्यागेन निर्विशेषचितोरेवैकीभावस्य वाच्यत्वेन परमैश्वर्यायोगादिति भावः । परिमाणतो परिच्छिन्नरूपेति मत्वाऽऽह ॥ अनन्तरूपेति ॥ पुनरुक्तिरिति ॥ पूर्वोक्त्यैवेति ॥ अभ्यासरूपमित्युक्त्यैवेत्यर्थः ॥ परं निधानम् ॥ उत्तमाश्रय इत्यर्थः । मयेदं व्याप्तमित्यादिरादि-

समाप्नोषि ततोऽसि सर्वः" इति सर्वं खल्विदं ब्रह्म इत्यादिषु सर्वशब्दव्याख्यानरूपम् ॥ १९ ॥

"त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुरूपतः ॥
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकदा भवेत् ।
तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ॥
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ।
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ॥

---

'नमोऽस्तु ते सर्वत एव सर्व' इति सर्वशब्देन सम्बोध्य 'सर्वं समाप्नोषि' इति किमर्थमसौ व्याख्यायत इत्यतो वाऽऽह ॥ सर्वमिति ॥ नात्र स्ववचनं व्याक्रियते, येन वैय्यर्थ्यं स्यात् । किन्तु 'सर्वं खल्विदं ब्रह्म', 'सर्वं ह्येतद् ब्रह्म' इत्यादिवाक्येषु श्रुतसर्वशब्दमनूद्य तद्व्याख्यानमिदं स्वोक्तस्थापनार्थमिति भावः ॥ १९ ॥

ननु 'मन्यसे यदि तच्छक्यं मया द्रष्टुं' इति स्वस्यापि यद्दर्शनमसुलभमुक्तं तादृशरूपदर्शनं कथं लोकत्रयस्य 'दृष्ट्वाऽद्भुतं रूपं' इत्यादिनाऽर्जुनेनोच्यते । 'सुखमात्यन्तिकं' इत्यादौ भगवद्दर्शनस्य परमानन्दहेतुत्वेनोक्तत्वात् कथं विश्वरूपदर्शनस्य व्यथाहेतुत्वमुच्यत इत्यत आह ॥ त्रिलोकेष्विति ॥ किं विश्वरूपदर्शनं सदा भयङ्करमित्यत आह ॥ दर्शनेति ॥ किमेवं सर्वरूपेष्वपि प्रथमतो भीतिर्भवतीत्यत आह ॥ तस्मिन्निति ॥ उग्रत्वमिवातो भीतिरिति शेषः । तर्हि सर्वेषामपि भय-

---

पदार्थः ॥ अत्रोच्यते ॥ गीतायामुच्यत इत्यर्थः ॥ असाविति ॥ सर्वशब्द इत्यर्थः । स्वोक्तस्थापनायेति ॥ परं निधानमित्याद्युक्तस्थापनायेत्यर्थः ॥ लोकत्रयस्येति ॥ अर्जुनेनोच्यत इत्यन्वयः । केनोच्यत इत्यत उक्तम् ॥ दृष्ट्वेति ॥ सुखमात्यन्तिकमित्यादाविति ॥ षष्ठे सुखमात्यन्तिकं यत्तदित्यादावित्यर्थः ।

श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः।"

इत्याग्नेयवचनाद् "दृष्ट्वाऽद्भुतं रूपम्" इत्यादि युज्यते ॥ १९-२० ॥

मुक्ताः सुरसङ्घाः विशन्ति। "प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्।" इति ब्रह्माण्डे ॥ २१-२५ ॥

अन्यचेष्टां कुर्वतामपि भगवच्चेष्टयैव प्रलयोदके प्रजानां प्रवेशवत् प्रवेशो युज्यते। सेनामध्यतो भगवन्मुखानामुभयाभिमुख-

---

सम्भवात् किमर्थमुच्यते प्रायो भीता इत्यत आह ॥ अर्जुनादिति ॥ एतद्वचनबलेन लोकत्रयशब्दस्य तत्र स्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तविषयत्वात् भगवतः किञ्चिदुग्रत्वात्तद्दर्शिनां भयस्यापि सम्भवात् 'दृष्ट्वाऽद्भुतं' इत्यादिवाक्यमुपपन्नमिति भावः। "पश्यामि देवांस्तव देहे" इत्युक्तत्वात् "अमी हि त्वा सुरसङ्घा विशन्ति" इति पुनरुक्तिरित्यत आह ॥ मुक्ता इति ॥ अत्र "अमी सुरसङ्घाः" इति पारोक्ष्येण निर्दिष्टा मुक्ताः। तत्रामुक्ता इत्यपौनरुक्त्यमिति भावः। भवेदपुनरुक्तिर्यद्येतत् मुक्तविषयं स्यात्। तदेव कुतः? परोक्षनिर्देशस्यामुक्तेष्वपि सम्भवादिति चेन्न। "त्वां विशन्ति" इति स्वेच्छयैव भगवत्प्रवेशोक्तेरिति भावेनाह ॥ विशंतीति ॥ तथापि कुतो मुक्तविषयत्वमस्येत्यत आह ॥ प्रवेश इति ॥ २१-२५ ॥

ननु धृतराष्ट्रपुत्रादीनां भगवन्मुखप्रवेशोन्मुखचेष्टाऽभावात् कथं "अमी च त्वा धृतराष्ट्रस्य पुत्राः" इत्याद्युच्यत इत्यत आह ॥ अन्येति ॥ भगवन्मुखप्रवेशानुन्मुखचेष्टानामपि भगवन्मुखचेष्टयैव तत्र प्रवेशादुपचारेण विशन्तीति प्रयोगो युज्यते। प्रलयोदकप्रवेशानुन्मुखचेष्टानां प्रजानां तच्चेष्टयैव तत्र प्रवेशे "प्रविष्टा उदकं प्रजाः" इति प्रयोगवदित्यर्थः। भगवन्मुखचेष्टयैव तत्र प्रवेशश्चेत् धार्तराष्ट्रसेनाया एव भवेत्। भगवन्मुखानां तदभिमुखत्वात्। अतः "सहास्मदीयैः"

---

योग्यत्वेऽपि सति प्रतिबन्धके तद्दर्शनाभावादाह ॥ प्रतिबन्धकहीनेति ॥

त्वाचोमे सेने तत्र प्रविशतः। ये तु तस्मिन् मुहूर्ते मरिष्यन्ति तेषां दशनान्तरे चूर्णितमपि शिरः सूक्ष्मदृष्टिगोचरत्वात् मानुषदृष्ट्या तथा न दृश्यते। यथा भिन्नमपि घटादिकं यावत् पृथङ् न पतति तावन्मन्ददृष्टीनां न ज्ञायते। यथा पुरूरवसो जराऽश्विभ्यामेव दृष्टा ॥ २६-३० ॥

---

इत्ययुक्तं स्यादित्यत आह ॥ सेनेति ॥ ननु युद्धोपक्रम एव चूर्णितोत्तमाङ्गतयाऽन्यैरदृष्टाः कथमर्जुनेन मया तथा सन्दृश्यन्त इत्युच्यते "केचिद्विलग्नाः" इत्यादिनेत्यत आह ॥ ये त्विति ॥ तस्मिन्नेव मुहूर्ते मरिष्यमाणानामेवात्र ग्रहणाद् युद्धोपक्रम एवैवमुक्तिर्युक्ता। विशीर्णत्वेनापतितस्य सूक्ष्मदृष्टिगोचरत्वादन्येषां तथा दर्शनं च युक्तम्। "दिव्यं ददामि ते चक्षुः" इत्यादेरर्जुनस्य दिव्यदृष्टित्वादन्यादृष्टदर्शनं च युक्तमिति भावः। अन्येषां तददर्शने दृष्टान्तमाह ॥ यथेति ॥ दिव्यदृष्टित्वादर्जुनस्यान्यादृष्टदर्शने दृष्टान्तमाह ॥ यथेति ॥ एतच्च विष्णुधर्मे विस्तरेणोक्तम् ॥ २६-३० ॥

---

विष्णुधर्मे विस्तरेणोक्तमिति ॥ एकोनविंशाध्याये। पुरूरवसो रूप दृष्टुमागतावश्विनौ प्रति पुरूरवो राजा तैलाभ्यक्तोऽस्मि, स्नात्वा भूषणभूषित आगमिष्यामि, तदा मद्रूपं द्रष्टव्यमित्युक्ते 'अप्रसाधितमेवाशु भवन्तं वसुधाधिपम्। पश्यावो भूषितं त्वां वै पश्चात्संक्रन्दनान्वितम्' इत्यश्विभ्यामुक्ते तूर्णं बहिर्निर्गतं राजानं "अंगोपांगादिकं सर्वं नृपतेस्तदपश्यताम्। शिरोललाटबाह्वास्यनयनादिविलोकनम्। कृत्वा चिरं महीपालमूचतुस्तावरिंदमौ। प्रविश्य स्नात्वा भूपाल यथार्हैश्च विभूषणैः। विभूषिततनुं भूयः त्वां द्रक्ष्यावो नरेश्वर"। इत्यश्विभ्यामुक्तो राजा गृहं प्रविश्य स्नातोऽनुलिप्तः वस्त्रालंकारभूषणभूषितोऽश्विनोः समीपमागतः। तदा तौ तद्रूपं दृष्ट्वा हासं चक्रतुः। राज्ञा हासकारणे पृष्टे "शृणु भूपाल सकलमावयोर्हासकारणम्। युष्मदर्शनसंभूतं क्षणापचयहेतुकम्। अस्नातस्याभवत्पूर्वं यादृशी ते सरूपता।

विशेषगुणकर्मविषय एव प्रश्नः । विष्णविति सम्बोधनात् ॥३१॥

"कालः कलितसम्पूर्णसद्गुणत्वाज्जनार्दनः ।
संहारात् सर्वविस्त्वाद्वा सर्वविद्रावणेन वा ॥"

इति महावाराहे । अपिशब्देन भ्रात्रादीनप्यृते ॥ ३२-३३ ॥

जयद्रथस्य पितुर्वरादेव विशेषः । निहता निहतप्रायाः ।

---

"आख्याहि मे को भवान्" इत्यत्र को देवो भवानिति पृच्छतीत्यन्यथाप्रतीतिनिरासायाऽह ॥ विशेषेति ॥ गुणादेः स्वयमेवोक्तत्वात् किं पुनः प्रश्नेनेत्यतो विशेषेत्युक्तम् । स्वाज्ञातविषय इत्यर्थः । स्वरूपविषय एव किं न स्यादित्यत आह ॥ विष्णवितीति ॥ "भासस्तवोग्राः प्रतपन्ति विष्णो' इत्यर्जुनेन भगवतः सम्बोधितत्वेन विष्णुरिति पूर्वमेव ज्ञातत्वात् विशेषगुणकर्मादिविषय एवायं प्रश्नो न स्वरूपमात्रविषय इत्यर्थः ॥ ३१ ॥

परिहारे गुणादेरनुक्तत्वात् नायं तद्विषय इत्यतः कालशब्द एव गुणादिवाचीति भावेन स्मृत्यैव तं व्याचष्टे ॥ काल इति ॥ कलिताः स्वसम्बद्धाः । कल बन्धने, कल संहरणे, कल ज्ञाने, कल विद्रावण इति पठन्ति । उग्ररूपः किमर्थमिति प्रश्नपरिहारायोक्तं "लोकक्षयकृत्" इत्यादि । तदुपपाद्यते "ऋतेऽपि" इति । तत्र युधिष्ठिरादीनामप्युर्वरितत्वात् कथं त्वामृते सर्वे मरिष्यन्तीत्युच्यत इत्यत आह ॥ अपीति ॥ नात्रार्जुनमेकमृते सर्वे मरिष्यन्तीत्युच्यते । किन्तु अर्जुनभ्रातॄनश्वत्थामादींश्च विना । अपिशब्देन तेषां समुच्चितत्वादिति भावः ॥ ३२-३३ ॥

यतोऽहमेव लोकान् समाहर्तुमिह प्रवृत्तोऽतो वैरिजये सन्देहायोगाद् युध्यस्वेत्युच्यते "तस्मात्" इति । तत्र द्रोणं च भीष्मं चेति जयद्रथस्य द्रोणादिवद्विशिष्योक्तिः कथम ? तावत्सामर्थ्याभावादित्यत

---

साम्प्रत तादृशी नेयं भूषितस्यापि भूषणैः । दिव्येन चक्षुषा भूप कालस्यास्य च तस्य च । वपुःपरिणतिं स्वस्मात् पश्यात्वोऽपचयप्रदाम्" इत्यादिनेति भावः ॥ युधिष्ठिरादीनामिति ॥ पञ्चानां पाण्डवानां अश्वत्थामकृतवर्मकृपाणां चेत्यर्थः ॥

पश्चादर्जुनेऽपि स्थित्वा स एव हनिष्यति ॥ ३४-३८ ॥

"वायुर्बलज्ञानयोगात् शशाङ्कोऽतिसुखाङ्कितः ।
इन्द्रः स परमैश्वर्यादिति नानाभिधो हरिः ॥"

इति च ॥ ३९-४१ ॥

एकः सर्वोत्तमोऽप्यसत्कृतः ।

---

आह ॥ जयद्रथस्येति ॥ योऽस्य शिरः छिन्नं भूमौ पातयेत्तच्छिरो भिद्यतामिति पितृदत्तातिबलिष्ठवरादेवास्य विशेषोक्तिर्न तु द्रोणादिवत् सामर्थ्यविशेषादित्यर्थः । ननु जीवन्त एव कथं "मयैवेते निहताः" इत्युच्यते । तथात्वे च कथं "जेताऽसि" इत्युच्यत इत्यत आह ॥ निहता इति ॥ निहतप्रायत्वं नामापहृतायुष्ट्वेन सन्निकृष्टमरणत्वम् । यदि साक्षान्न निहतास्तर्हि हन्ता भवेति वक्तव्यम् । निमित्तमात्रं भवेति कथमुच्यत इत्यत आह ॥ पश्चादिति ॥ तस्य स्वातन्त्र्येण हन्तृत्वाभावात् निमित्तमात्रमित्युक्तमिति भावः । मृतमारणायोगात् "मया हतांस्त्वं जहि" इति कथमुच्यत इत्यतो वाऽह ॥ पश्चादिति ॥ अर्जुने स्थित्वा तस्यैव हन्तृत्वात् मया हतेषु त्वमपि हन्तेति व्यवहारविषयो भवेत्येव भगवतोच्यत इति भावः ॥ ३४-३८ ॥

वायुर्यमोऽग्निरित्याद्यर्जुनस्तुतिवाक्ये वाय्वादीनां भगवदभेद उच्यत इत्यन्यथाप्रतीतिनिरासाय वाय्वादिशब्दानां भगवति योगवृत्तिं स्मृत्यैव दर्शयति ॥ वायुरिति ॥ वबयोरभेदाद् वकारो बलवाची । अयपय गताविति धातोः आयुशब्दो ज्ञानवाची । इदि परमैश्वर्ये इति धातुः ॥ ३९-४१ ॥

"असत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाऽपि" इत्यत्र यद्यप्यहं त्वमेक एव । तथापि लोकव्यवहारानुसारेण क्षामय

---

साक्षान्न निहता इति ॥ भगवतेति योज्यम् ॥ इति धातोरिति ॥ उण् प्रत्यये आयुरिति रूपमिति भावः ॥ इति धातुरिति ॥ तस्मादप्रत्यये इदित्वा-

"एकः सर्वाधिको ज्ञेय एक एव करोति यत्।"
इति च ॥ ४२-४५ ॥

तेनैव रूपेण भवेत्यनन्तरूपगोपनेन तदेव प्रकाशयेत्यर्थः।

"पञ्चाननं चिन्त्यमचिन्त्यरूपं पद्मासनं गोपितविश्वरूपम्।"
इति वैहायससंहितायाम् ॥ ४६ ॥

"विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः।"
इति पाद्मे। त्वदन्येन न दृष्टपूर्वमित्यनेन तेनैवेन्द्रशरीरेण दृष्टमिति ज्ञायते। त्वदन्येनेति त्वदवरापेक्षया। तैरपि तद्वन्न दृष्टमित्येव।

---

इत्यन्यथाप्रतीतिनिरासायाह ॥ एक इति ॥ तर्ह्यन्वयो नोपपद्यत इत्यतस्तं दर्शयति॥ अपीति॥ सर्वोत्तमत्वेनासत्काराद्योग्योऽप्यसत्कृतोऽसीत्येवोच्यते। नान्यत्। अर्जुनस्य भगवदैक्ये मानाभावादिति भावः। एकशब्दः कथं सर्वोत्तमवाचीत्यत आह॥ एक इति॥ एकत्वाद् यः, करोतीति क इत्यर्थः। अन्यनिरपेक्षतया हि कर्ता सर्वोत्तमः ॥ ४२-४५ ॥-

"तेनैव रूपेण भव" इत्यर्जुनप्रार्थनावाक्ये विश्वरूपं विहाय पूर्वतनं गृहाणेत्युच्यत इत्यन्यथाप्रतीतिनिरासायाह॥ तेनैवेति॥ यदा रूपान्तरं प्रतीयते तदा विश्वरूपत्याग एव किं न स्यात्, किं तद्गोपनेनेत्यत आह ॥ पञ्चाननमिति ॥ नरसिंहरूपेऽपि गोपितविश्वरूपत्वोक्तेर्न रूपान्तरप्रतीतौ विश्वरूपत्याग इति भावः ॥ ४६ ॥

भक्त्यतिशयोत्पादनाय विश्वरूपदर्शनस्य दौर्लभ्यमुच्यते "मया" इति। तत्र "तेजोमयं विश्वं" इति विश्वात्मकत्वं भगवद्रूपस्योच्यत इत्यन्यथाप्रतीतिनिरासाय विश्वशब्दं स्मृत्यैव व्याचष्टे॥ विश्वेति॥ "यन्मे त्वदन्येन न दृष्टपूर्वं" इत्यर्जुनेतरैर्विश्वरूपस्यादृष्टत्वमुच्यते इत्यन्यथाप्रतीतिनिरासायाह॥ त्वदिति॥ नात्र विश्वरूपस्यार्जुनेतरैरदृष्टत्वमुच्यते। प्रत्युतेतः पूर्वं केनापि न दृष्टमित्यनुक्त्वा त्वदन्येनेत्युक्-

---

न्नुमागमे इन्द्रेति रूपमिति भावः ॥ करोतीति क इति ॥ कृञो डप्रत्ययः।

"विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः ।
तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ॥
यथेन्द्रेण पुरा दृष्टमपश्यत् सोऽर्जुनोऽपि सन् ।
तदन्ये क्रमयोगेन तच्छतांशादिदर्शिनः ॥"

इति ब्रह्माण्डे ॥ ४७ ॥

वेदादिभिरपि त्वदवरैर्णैवं द्रष्टुमशक्यम् । अन्यथा "दृष्ट्वाऽद्भुतं रूपम्" इत्यादिविरोधः ॥ ४८-४९ ॥

---

त्वात् तेनैवेतः पूर्वम् इन्द्रशरीरेण दृष्टमित्येवोच्यत इत्यर्थः । तर्हि ब्रह्मादिभिरपि न दृष्टमित्यपि नाशङ्कनीयम् । त्वदन्येनेत्यर्जुनादधमविवक्षयोक्तत्वादित्याह ॥ त्वदिति ॥ नैतावताऽर्जुनाधमैर्न दृष्टमिति कल्पनीयम् । अधमैरप्यर्जुनवन्न दृष्टमित्यभिप्रायेणैवादृष्टत्वस्योक्तत्वादित्याह ॥ तैरिति ॥ भवेदेवैतद् व्याख्यानं यदि विश्वरूपं ब्रह्मादिभिरिन्द्रेणार्जुनादधमैश्च दृष्टं, इन्द्रेण चार्जुनवदेव दृष्टं, अर्जुनादधमैस्तद्वन्न दृष्टमित्येतत्सिध्येत्, तदेव कुत इत्यत आह ॥ विश्वरूपमिति ॥ इन्द्रस्याधिकदर्शित्वेऽल्पदर्शित्वे वा विशिष्य त्वयेन्द्रशरीरेण दृष्टमित्युक्तिर्न सम्भवति । आधिक्येऽनुक्तेराधम्ये निषेधस्य चादर्शनात् ॥ ४७ ॥

यद्यन्येषामपि विश्वरूपदर्शनमत्राभिप्रेतं स्यात्तर्हि "न वेदयज्ञाध्ययनैर्न दानैः" इत्युत्तरवाक्यविरोध इत्यत आह ॥ वेदेति ॥ नोत्तरवाक्येऽर्जुनादन्येषां विश्वरूपदर्शनाभाव उच्यते । किन्तु त्वदवरैस्त्वद्वन्न दृष्टमित्युक्तेः स्वतस्तथा दर्शनाभावेऽपि वेदादिसाधनैस्तथा तैर्दृश्यतामित्याशङ्क्य त्वदवरैर्वेदादिसाधनैरपि त्वद्वन्न द्रष्टुं शक्यत इत्येवोच्यत इति भावः । विश्वरूपस्यार्जुनादन्येनादृष्टत्वमेवार्थः किं न स्यादिति चेन्न ।

---

प्रत्युतेत्यस्येत्येवोच्यत इत्यनेनान्वयः । त्वयेंद्रशरीरेण दृष्टमिति विशिष्य कस्मान्नोच्यते किं त्वदन्येत्यादिवक्रोक्त्येत्यत आह ॥ इन्द्रस्येत्यादि ॥ उदाहृत-

*

स्ववत् क्रियत इति स्वकं रूपम् । विश्वरूपमज्ञानां स्वरूपवन्न दर्शयति । एतदज्ञानामपि तथैव दर्शयतीति विशेषः । अन्यथा "द्रष्टुमिच्छामि ते रूपम्" इति विरुद्धं स्यात् ।

"परावरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावस्वरूपाणां विश्वरूपस्य च प्रभोः ॥
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया ।"

इति च ॥ ५० ॥

---

उदाहृतस्मृतिविरोधात् । अत्रापि "दृष्ट्वाऽद्भुतं रूपं", "दृष्ट्वा लोकाः" इत्यादिपूर्ववाक्यविरोधः स्यादित्यत आह ॥ अन्यथेति ॥ ४८-४९ ॥

"स्वकं रूपं दर्शयामास" इति कृष्णरूपस्य विशिष्य स्वीयत्वोक्तेः यदुक्तं विश्वरूपस्य साक्षादीश्वरस्वरूपत्वं तदयुक्तमित्यत आह ॥ स्ववदिति ॥ नात्र स्वकशब्देन कृष्णरूपस्य स्वकीयत्वमुच्यते, येन विश्वरूपस्य स्वकीयत्वं न स्यात् । किन्तु स्ववत् स्वकीयवत् क्रियते प्रदर्श्यत इति व्युत्पत्त्या स्वकीयतया प्रदर्शनीयत्वमेवेत्यर्थः । ननूभयोरपि भगवदीयतया प्रदर्श्यमानत्वात् कृष्णरूपस्यैव कुतो विशेषोक्तिरित्यत आह ॥ विश्वरूपमिति ॥ सत्यमुभयं रूपं भगवदीयतया प्रदर्श्यत इति, किन्तु ज्ञानिनामेव । अज्ञानिनां तु कृष्णरूपमेव भगवद्दीयतया प्रदर्श्यते । न तु विश्वरूपमतोऽज्ञविवक्षया विशेषोक्तिर्युक्तेति भावः । अत एवाल्पज्ञानिविवक्षया स्ववदित्युक्तम् । किमर्थमेवं व्याख्येयम् ? विश्वरूपं भगवदीयमेव किं न स्यादित्यत आह ॥ अन्यथेति ॥

कृष्णरूपविश्वरूपयोः स्वकीयत्वास्वकीयत्वप्रतीतिनिराकरणप्रसङ्गेन परमं रूपं दर्शयामासेति विश्वरूपस्य परत्वोक्त्या कृष्णरूपस्यापरत्वं स्मृत्यैव निराकरोति ॥ परेति ॥ अन्यथा स्वभावतः । तर्हि विश्वरूप

---

स्मृतीति ॥ विश्वरूपं प्रथमत इत्यादिस्मृतीत्यर्थः ॥ यदुक्तमिति ॥ एतदध्यायादाविति योऽयम् ॥ अन्यथेत्यनुवादः स्वभावत इति व्याख्या ॥ परत्वमिति ॥

किञ्चिन्मनुष्यवद् दृश्यमानत्वान्मानुषम् ॥ ५१ ॥
ये दर्शनकाङ्क्षिणस्तैरपीदानीं [1]दृष्टप्रायः ॥ ५२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीता-
तात्पर्यनिर्णये एकादशोऽध्यायः ॥ ११ ॥

---

एव परत्वं विदुषामपि कथं दृश्यत इत्यत आह ॥ व्यक्तिरिति ॥ विश्वरूपे परत्वव्यक्तिर्नावताररूपेषु ॥ अतस्तथा दृष्टिर्युक्तेति भावः । इयं च व्यक्तिरल्पज्ञानिविवक्षयोच्यते । न तु ब्रह्मादिमहाज्ञानिविवक्षया । तेषां कृष्णादावपि परत्वस्य प्रतीतेरित्याह ॥ अज्ञेति ॥ ५० ॥

ननु "दृष्ट्वेदं मानुषं रूपं" इति कृष्णरूपस्य मानुषत्वोक्तेः कथं नावरत्वमित्यत आह ॥ किञ्चिदिति ॥ अन्यथोदाहृतवाक्यविरोधः स्यादित्यर्थः ॥ ५१ ॥

ननु "सुदुर्दर्शमिदं रूपं" इत्यत्र देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण एव वर्तन्ते, न तु पश्यन्तीत्युक्तत्वात् कथमर्जुनादुत्तमैरधमैश्च विश्वरूपस्य दृष्टत्वमुच्यत इत्यतस्तद्वाक्यं यथावद्योजयति ॥ य इति ॥ अनेन यन्मम रूपं दृष्टवानसि, अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो ये देवास्तेऽपि यद्दृष्टवन्तस्तदिदं सुदुर्दर्शमिति योजना सूचिता भवति । अन्यथोक्तविरोध इति भावः ॥ ५२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीता-
तात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां
न्यायदीपिकायां एकादशोऽध्यायः ॥ ११ ॥

---

उत्तमत्वमित्यर्थः ॥ उदाहृतवाक्येति ॥ परापरविभेदस्त्वित्यादिवाक्येत्यर्थः ॥ अन्यथोक्तेति ॥ दृष्ट्वाऽद्भुतं रूपं, विश्वरूपं प्रथमतो ब्रह्मापश्यदित्याद्युक्तविरोध इत्यर्थः ॥

इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते
एकादशोऽध्यायः ॥ ११ ॥

---

1. अ. दृष्टं प्रायः ।

# ॥ अथ द्वादशोऽध्यायः ॥

हरिः ॐ ॥ साधननिर्णयोऽत्र । "श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ।"

"उपासिता मुक्तिदा सद्य एव
ह्यस्येशाना जगतो विष्णुपत्नी ।
या श्रीर्लक्ष्मीरौपला चाम्बिकेति
ह्रीश्चेत्युक्ता संविदग्र्या सुविद्या ॥"

इत्यादिश्रुतिभ्यः,

---

ॐ ॥ एतदध्यायप्रतिपाद्यमर्थं दर्शयति ॥ साधनेति ॥ मोक्षसाधनयोरव्यक्तभगवदुपासनयोर्मध्ये प्रागुक्तभगवदुपासनस्याधिक्यनिर्णयोऽस्मिन् अध्याये क्रियत इत्यर्थः । ननु भगदुपासनस्येवाव्यक्तोपासनस्यापि यदि मोक्षसाधनत्वं क्वचिदुक्तं स्यात्तदा "एवं सततयुक्ताः" इति सन्दिह्य प्रश्नो युज्यते । न च तदस्तीत्यतः कथं प्रश्न इत्यत आह ॥ श्रिय इति ॥ यः पुरुषः श्रीसमाराधनार्थं जातोऽसौ तदर्थमेव गृहान्निर्गतो भवति स श्रियं उपदेष्टृभ्यो गुरुभ्य एव स्वस्य वयो धत्ते । एवं श्रियमुपासीनाः पुरुषा अमृतत्वं यान्ति । तस्मिन्

---

हरिः ॐ ॥ प्रागुक्तेति ॥ मत्कर्मकृदित्यादिनोक्तेत्यर्थः । अनेन पूर्वानन्तर्यमप्यस्याध्यायस्य सूचितं भवति ॥ संदिह्येत्यनन्तरं कृत इति योज्यम् । तेन ल्यबन्तोपपत्तिः । द्वितीयश्रिये इत्यस्यार्थः ॥ तदर्थमेवेति ॥ श्रीदेवीसमाराधनार्थमेवेत्यर्थः । श्रियं जरितृभ्य इत्यस्यार्थः ॥ श्रियं उपदेष्टृभ्य इति ॥ श्रियं प्रति वसानाः वसन्त इति वा तामाच्छाद्य स्थिता इति वाऽर्थ इत्युपेत्य फलितमाह ॥ उपासीना इति ॥ यान्तीति लकारव्यत्ययेनार्थोक्तिः । पद्मनाभतीर्थीये तु श्रियं संपदं वय आयुश्च जरितृभ्यः श्रीदेवी दधाति

"श्रीः सुतुष्टा हरेस्तोषं [1]जनयेत् क्षिप्रमेव तु ।
अतुष्टा तदतुष्टिं च तस्माद् ध्येयैव सा सदा ॥
अव्यक्तं प्रकृतिं प्राहुः कूटस्थं चाक्षरं च ताम् ।
प्रधानमिति च प्राहुर्महापुरुष इत्यपि ॥
तां ब्रह्म महदित्याहुः परं जीवं परां चितिम् ।
तस्यास्तु परमो विष्णुर्यो ब्रह्म परमं महत् ॥"

इति ब्रह्माण्डवचनाच्चाव्यक्तोपासनात् मोक्षाशङ्कया पृच्छति। 'कूटस्थोऽक्षर उच्यते' इत्युत्तरवचनात् 'कूटस्थमचलम्' इत्यत्राप्युक्तेरव्यक्त-

---

गुरुशिष्याख्ये मिथुने समीहितानि सत्यानि भवन्तीत्यर्थः । किं श्रिय उपासनं स्वातन्त्र्येणैव मोक्षसाधनमित्यतः श्रीप्रसादमुत्पाद्य ततो भगवत्प्रसादद्वारेणैवेति भावेन स्मृतिमाह ॥ श्रीरिति ॥ श्रीप्रसादस्य भगवत्प्रसादोत्पादकत्वं कुत इत्यतः श्रियोऽतिमहिमानमाह ॥ अव्यक्त-मिति ॥ एवम्भूता चेत् श्रीस्तर्हि तत्प्रसादः स्वयमेव पुरुषार्थहेतुः किं न स्यात् ? ईश्वरप्रसादसाधनत्वं तस्य किमर्थमुच्यत इत्यत आह ॥ तस्या इति ॥ श्रियोऽपि विष्णोः परमत्वान्न तत्प्रसादस्य स्वातन्त्र्येण पुरुषार्थ-साधनत्वं, किन्तु विष्णुप्रसादत्वेनैवेत्यर्थः । विष्णोः महद्ब्रह्मभूतश्रिय उत्तमत्वे हेतुमाह ॥ य इति ॥ एवं श्रुतिपुराणवाक्येभ्यो विष्णूपास-नस्येवाऽव्यक्तोपासनस्यापि मोक्षसाधनत्वप्रतीतिजातया भगवदुपासनं वाऽव्यक्तोपासनं वा उत्तमं मोक्षसाधनमिति शङ्कयोत्तमसाधनं पृच्छ-तीत्यर्थः ।

यदि भगवदुपासनस्येव श्रिय उपासनस्यापि मोक्षसाधनत्वं प्रतीयेत तर्हि तद्विषय एव प्रश्नः कर्तव्यः । अव्यक्तोपासनविषये किमर्थं क्रियत इत्यत आह ॥ कूटस्थ इति ॥ "कूटस्थोऽक्षर उच्यते"

---

ददाति । मितद्रौ मिथुने दंपत्योः श्रियमुपासीनयोः समिधा समीहितानि सत्यानि भवन्तीत्यर्थ उक्तः । भाष्यटीकायां तु मितद्रावित्यस्य समुद्रे

1. अ. गमयेत् ।

शब्दः चित्प्रकृतिवाची । अन्यथा 'ये त्वां पर्युपासते', ये चाप्य-क्षरं', 'तेषां के योगवित्तमाः' इति भेदेन प्रश्नानुपपत्तिः । 'परं ब्रह्म परं धाम पवित्रं परमं भवान्' इति तेनैवोक्तत्वात् । ये तु 'ते मे युक्ततमा मताः', 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽप्य-व्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादतीव[1] साहसिका इति सुशोच्या एव ।

---

इत्युपरितनवाक्ये चित्प्रकृतावेव प्रयुक्तकूटस्थाक्षरशब्दयोरत्राप्यव्यक्ते प्रयुक्तत्वेनाव्यक्तं चित्प्रकृतिरेव । अतः चित्प्रकृत्युपासनस्य मोक्ष-साधनत्वप्रतीत्याऽव्यक्तोपासनविषये प्रश्नो युक्त एवेति भावः । एतेन 'इत्यादिश्रुतिभ्यः', 'अव्यक्तोपासनात्' इत्यस्याप्यनवद्यत्वं सिध्यति । नन्वव्यक्तादिशब्दानां परब्रह्मणि मुख्यत्वादत्र तत्किं विवक्षितं न स्यादित्यत आह ॥ अन्यथेति ॥ यद्यत्राव्यक्तशब्देन परब्रह्मोच्येत तर्हि त्वदुपासकाव्यक्तोपासकानां मध्ये क उत्तम इति भगवतोऽव्यक्तस्य च भेदेनार्जुनप्रश्नोऽनुपपन्नः स्यादित्यर्थः । कुतोऽनुपपन्न इत्यतोऽर्जुनेनैव भगवतः परब्रह्मत्वस्योक्तत्वादित्याह ॥ परमिति ॥

अन्ये त्वत्राव्यक्तपदेन यत्किञ्चिच्छून्यापरनामकं निर्गुणं ब्रह्मोच्यत इति मन्वानाः तदुपासकेश्वरोपासकयोः कोऽधिक इति प्रश्नार्थं कल्प-यित्वाऽव्यक्तोपासकानामेवाधिक्यं परिहारे कथ्यत इति वदन्ति । तान् प्रत्याह ॥ ये त्विति ॥ 'ते मे युक्ततमा मताः' इति भगवता स्वोपास-कनामुत्तमत्वमुक्त्वा 'मय्येव' इति मदुपासकानामेवोत्तमत्वात् मदुपासक एव भवेति स्फुटमुक्तत्वादव्यक्तोपासकानामाधिक्यं वदता-

---

क्षीराब्धावित्युक्तम् ॥ किमर्थं क्रियत इति ॥ प्रश्न इत्यनुषङ्गः ॥ एतेनेति ॥ अव्यक्तस्य चित्प्रकृतित्वसमर्थनेनेत्यर्थः । अन्वयमुखेनानुवदति ॥ इत्यादि श्रुतिभ्योऽव्यक्तोपासनादिति ॥ ननु पूर्वोत्तरार्धयोः कृष्णोपासक(पर)ब्रह्मो-पासकविषयतया भेदेनार्जुनप्रश्नोऽयुक्त इति भावेनाक्षिपति ॥ कुतोऽनुपपन्न

---

1. अ. अतिसाहसिकाः ।

'न चलेत् स्वात् पदाद्यस्मादचला श्रीस्ततो मता।'

इत्याग्नेये।

"सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा।
अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः॥"

इति नारदीये॥

"अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः।
शपेदुपासिताऽप्येषा श्रीस्तान् तद्धरितत्त्ववित्॥
तद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा।
तेन तुष्टा तु साऽच्छिद्रं दद्याद्विष्णोरुपासनम्॥

---

मपलापकत्वमेव। ततश्च साहसिकत्वात् 'अहो नष्टा एते' इति शोकविषयत्वमेव न तु परिहारं वक्तुं प्रतिवादित्वमित्यर्थः।

ननु चेष्टावत्याः श्रियोऽचलत्वम् 'अचलं ध्रुवम्' इति कथमुच्यत इत्यतः स्मृत्यैव तद्धटयति॥ नेति॥ 'अनिर्देश्यमव्यक्तमचिन्त्यं पर्युपासते' इति व्याहतम्। अनिर्देश्याव्यक्ताचिन्त्यस्योपासनायोगादित्यतः अनिर्देश्यत्वादिकमुपास्यत्वाविरोधेन स्मृत्यैव घटयति॥ सूक्ष्मत्वादिति॥

मदुपासका एवोत्तमा इत्युच्यते 'मयि' इति। त्वदुपासकानामिवाव्यक्तोपासकानामपि मोक्षसद्भावात् कथं तेषामुत्तमत्वमित्यतोऽव्यक्तोपासकानां मोक्षमङ्गीकृत्य सहेतुकं स्वोपासकानामुत्तमत्वमुच्यते "ये त्वक्षरम्' इति। तत्रोच्यमानभगवत्प्राप्तिः न केवलशाक्तेयानामिति भावेन मयीत्यादिकं श्रुत्यैव व्याचष्टे॥ अविष्णुज्ञैरिति॥ अत्र "ध्यायीत नित्यदा" इत्यन्तेन परीत्युपसर्गाभिप्राय उक्तो भवति। "तेन तुष्टा" इत्यनेन "ते प्राप्नुवन्ति मामेव" इत्यस्याभिप्राय उक्तो भवति।

---

इति॥ सहेतुकमिति॥ क्लेशाभावरूपहेतुसहितमित्यर्थः। व्यक्तमेतदग्रे सुष्ठाचारादेरौन्येपीत्यादिना॥ केवलशाक्तेयानामितीति॥ भगवद्भक्त्यादि-

ततस्तद्दर्शनान्मुक्तिं यात्यसौ नात्र संशयः ।
तथापि सर्वपरमां सर्वदोषविवर्जिताम् ॥
ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।
विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ॥
यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।
विष्णुना सहिता ध्याता सा हि[1] तुष्टिं परां व्रजेत् ॥
अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्यमिति मुक्तिश्चिराद्भवेत् ।
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम् ॥"

---

एवमव्यक्तोपासनस्य मोक्षसाधनत्वेऽपि न तदेवोत्तमं मन्तव्यमिति भावेनाह ॥ तथापीति ॥ उपासते श्रिया सहेति शेषः । अनेन 'मय्यावेश्य' इत्युक्तार्थं भवति । अव्यक्तोपासकानामपि मोक्षसद्भावे कथं भगवदुपासकानामुत्तमत्वमित्यत आह ॥ यत इति ॥ अनेन "क्लेशः" इति व्याख्यातं भवति । अनेन उक्तप्रकारेण पर्युपासनम् इन्द्रियग्रामातिनियमनं, सर्वत्र समबुद्धित्वं, सर्वभूतहितेरतत्वादिसुष्ठाचारमन्तरेण अव्यक्तप्रसादाभावात् परमश्रद्धामात्रयुक्तानां सुष्ठाचाराद्यौन्येऽपि भगवत्प्रसादसम्भवात् क्लेशाधिक्यं ज्ञातव्यम् । इतश्च भगवदुपासनमेवोत्तममित्याह ॥ विष्णुनेति ॥ श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसम्भवेनाचिरात् मोक्षो भवति । पृथगव्यक्तोपासनपक्षे तु किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह निरन्तरं भगवदुपासनं कर्तव्यम् । ततो मुक्तिरिति चिरेणैव भवतीत्यतोऽपि भगवदुपासनमेवाधिकमिति भावः । अनेन

---

हीनश्रीदेवीमात्रोपासकानामित्यर्थः ॥ उक्तप्रकारेण पर्युपासनमिति ॥ हरितत्ववित् तद्भक्तस्तमुपास्यैव श्रियं ध्यायीतेत्युक्तप्रकारेणेत्यर्थः ॥ औन्येपीति ॥ ऊनत्वेऽपीत्यर्थः ॥ इतश्चेति ॥ भगवदुपास्तिरूपमुक्तिमार्गस्य मोक्षफलकत्वे

---

1. अ. साऽपि ।

इति परमश्रुतिः । युक्ततमाः साधकतमाः ॥ २ ॥ ३ ॥

विष्णोरन्यं[1] न स्मरेद्यो विना तत्परिवारताम् ।
तदधीनतां वाऽनन्ययोगी स परिकीर्तितः ॥

इति च ।

'अन्तवत्तु फलं तेषाम्' इत्यादिनाऽन्यदेवतो[2]पासनायाः पूर्वं[3]

---

"ये तु सर्वाणि" इत्येतदुक्तार्थं भवति । हेतुद्वयेनोक्तं विष्णूपासनस्याधिक्यमुपसंहरति ॥ तस्मादिति ॥ तेषामाधिक्यं चेति शेषः ॥

ये नित्ययुक्तास्ते युक्ततमा इत्ययुक्तम् । एकार्थत्वादित्यत आह ॥ युक्तेति ॥ नित्ययुक्तपदं नित्योद्युक्तार्थमिति च द्रष्टव्यम् । ननु 'ये तु सर्वाणि' इत्यत्रानन्ययोगेन भगवदुपासनस्योत्तमत्वमुच्यते । अतः कथं श्रिया सहितभगवदुपासनस्य आधिक्यकथनपरतयैतद्व्याख्यायत इत्याशङ्कां प्रमाणवाक्येनैव परिहरति ॥ विष्णोरिति ॥ नात्रानन्ययोगपदेन अन्योपासनसम्बन्धो निषिद्ध्यते । किन्त्वन्यस्य भगवदधीनत्वं तत्परिवारत्वं विनोपासनम् । अतो युक्तं प्राचीनव्याख्यानमिति भावः । ननु यदि भगवदुपासकानामिवाव्यक्तोपासकानामपि मोक्षश्रवणात् तदुपासनविषये किमुत्तममिति प्रश्नः क्रियते तर्हि 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति', 'हरिं हरं विरञ्चं च ज्ञात्वा मुच्येत संसृतेः' इत्यन्यदेवतोपासनस्यापि मोक्षहेतुत्वश्रवणात् तद्विषये किमिति प्रश्नो न क्रियत इत्याशङ्कां सिंहावलोकनन्यायेन परिहरति ॥ अन्तवदिति ॥ अन्यदेवतोपासनाया मोक्षसाधनत्वस्य पूर्वमेव निषिद्धत्वेन श्रुत्यादौ तदुक्तावपि तस्यान्यार्थत्वं कल्पयित्वाऽव्यक्तोपासनविषय एव प्रश्नः

---

श्रीदेव्युपास्तिमार्गस्यैव विलम्बाभावहेतुतश्चेत्यर्थः ॥ हेतुद्वयेनेति ॥ अक्लेशत्वाचिरत्वरूपहेतुद्वयेनेत्यर्थः । हेत्वर्थकेतिशब्दानन्तरं शेषमाह ॥ तेषामित्यादि ॥ न केवलमक्लेशादिकमिति चार्थः ॥ पूर्वमेवेति ॥ सप्तमे

---

1. अ. अन्यत् । 2. अ. देवोपासनायाः । 3. अ. पूर्वमेव ।

निन्दितत्वात् लक्ष्म्यास्त्वतिसामीप्याद् विशेषमाशङ्क्य तदुपासनाविषय एव प्रश्नः कृतः ।

"वैष्णवान्येव कर्माणि यः करोति सदा नरः ।
जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ॥

---

कृतो नान्यदेवतोपासनविषय इति भावः । तर्हि सामान्यतो भगवदन्योपासनस्य मोक्षसाधनत्वस्य पूर्वमेव निषिद्धत्वेनाव्यक्तोपासनस्यापि तदभावप्राप्तेस्तद्वचनानामप्यर्थान्तरम् अकल्पयित्वा किमिति तद्विषये प्रश्नः क्रियत इत्यत उक्तम् ॥ लक्ष्म्या इति ॥ सामान्यतो भगवदन्योपासनस्य मोक्षसाधनत्वनिषेधेऽपि लक्ष्म्याः भगवदतिप्रियत्वेनान्येभ्यो विशेषसद्भावात् तदुपासनस्य मोक्षसाधनत्वसम्भवेन निषेधस्य तद्व्यतिरिक्तोपासनविषयत्वं कल्पयित्वाऽर्जुनेनान्योपासनविषयप्रश्नमकृत्वाप्यव्यक्तोपासनविषय एव प्रश्नः कृत इति भावः ।

मदुपासनस्याधिकत्वात्तदेव कुरु । तदलाभे मां जानीहि । तदभावे चाभ्यासयोगेन मां जानीहि । तदभावे च मत्कर्मपरो भव । तदशक्तौ च मद्योगमाश्रितः कर्मफलत्यागं कुर्वित्युच्यते—'मयि' इति । तत्र मत्कर्मकृत्त्वमेव मद्योगः । अतः कथमेतदित्यतः स्मृत्यैव व्याचष्टे ॥ वैष्णवानीति ॥ सर्वकर्माणि वैष्णवानि करोतीति योजना । विष्णुविषयतया करोतीत्यर्थः । अर्चामार्जनं प्रतिमास्नापनम् । आदिपदेन ध्यानं च ग्राह्यम् । तद्योगमात्रवान् तत्कर्मत्वोपायमात्रवान् । अनेन मद्योगमिति मत्कर्मत्वयोगमिति व्याख्यातम् । यदि भगवत्कर्मत्वं कामयते तर्ह्येव तद्योगो भवति । न तु काम्येनान्योपासनादिनेत्यर्थः । अनेन

---

अंतवत्तु फलं तेषामित्यादिना निषिद्धत्वेनेत्यर्थः ॥ श्लोकचतुष्टयार्थं संग्रहेणानुवदति ॥ मदुपासनस्येत्यादिना ॥ श्लोकचतुष्टयस्य प्रतीकग्रहणम् ॥ मयीतीति ॥ तद्योगो भवतीति ॥ वैष्णवतया सर्वकर्मकरणयोग्यो

स तत्कर्मेति विज्ञेयो योऽन्यदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ॥
तत्र पूर्वो विशिष्टः स्यादादिमध्यान्ततः स्मृतेः ।
अवान्तरे च नियमाद्विष्णोस्तद्दास्यताऽस्य यत् ॥
मनसा वर्ततेऽन्योपि यथाशक्ति हरिस्मृतेः ।
पूर्वोक्तयोग्यो भवति यदि नित्यं तदिच्छति ॥
असम्यग्ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ततस्तस्मात्तत्फलेच्छाविवर्जितम् ॥
तस्माज्ज्ञानाद्भवेन्मुक्तिः त्यागाद्ध्यानयुतात्[1] स्फुटम् ॥"

इति च । शान्तिर्मुक्तिः ॥ ४-१५ ॥

---

'सर्वकर्म' इत्युक्तार्थं भवति । भगवदुपासनेऽपि तारतम्यमाह ॥ असम्यगिति ॥ ध्यानालाभे ज्ञानं, तदलाभेऽभ्यास इत्येतत्समर्थ्यते— 'श्रेयो हि' इति । तदनेन व्याख्यातं भवति । ज्ञानपूर्वध्यानेऽपि सकामान्निष्काममेवाधिकमित्याह ॥ तस्मात् ॥ इति । तत्र हेतुमाह ॥ तस्मादिति ॥ अनेन 'ध्यानात्' इत्येतद् व्याख्यातं भवति । नन्वत्र त्यागाच्छान्तिः फलमुच्यते । अतः कथमुच्यते तस्मान्मुक्तिरित्यत आह ॥ शान्तिरिति ॥ नन्वत्र कर्मफलत्यागमात्रस्यैव ध्यानाधिक्य-मुच्यत इति किं नेष्यते ? ज्ञानपूर्वं ध्यानसाहित्यं किमुच्यते ? इत्यतो वाऽऽह ॥ शान्तिरिति ॥ अत्र त्यागस्य शान्तिपदोदितमुक्तिहेतुत्व-मुच्यते । न च तत्केवलत्यागग्रहणे युक्तम् । 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इत्युक्तत्वात् । ज्ञानपूर्वकध्यानसहितत्यागस्य

---

भवतीत्यर्थः ॥ तदनेनेति ॥ श्रेयो हीत्यादिकमसम्यगिति स्मृत्युदा-हरणेन व्याख्यातमित्यर्थः ॥ सन्यासस्त्विति ॥ त्यागस्त्वित्यर्थः ॥ अयोगतः ॥ कर्मानुष्ठानहीनात् ॥ इत्युक्तत्वादिति ॥ पञ्चमेऽध्याये ॥ प्रपंच्यत इति ॥

1. अ, त्यागध्यानयुतात् ।

अवैष्णवसर्वारम्भपरित्यागी । सर्वारम्भाभिमानत्यागेन फलत्यागेन भगवत्समर्पणरूपेण च त्यागी ।

'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।'

'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।'

इत्यादेः ।

'भक्तिं ज्ञानं च वैराग्यमृते यो नेच्छति क्वचित् ।
शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः ॥"

इति च ।

---

तत्सम्भवात् स एवात्र विवक्षित इति भावः ॥ ४-१५ ॥

'ये तु सर्वाणि कर्माणि इत्यादि प्रपञ्च्यते –'अद्वेष्टा' इति । तत्र 'सर्वारम्भपरित्यागी' इत्येतदन्यथाप्रतीतिनिरासाय चतुर्धा व्याचष्टे ॥ अवैष्णवेति ॥ उक्तार्थानुपपादयति ॥ सर्वेति ॥ सर्वकर्मफलत्यागमित्यनेन सर्वारम्भफलपरित्यागेन सर्वारम्भपरित्यागीत्युक्तं सिद्ध्यति । मयीत्यनेन सर्वारम्भाभिमानत्यागेन सर्वारम्भाणां भगवति समर्पणेन च सर्वारम्भपरित्यागीत्युक्तं सिद्ध्यति । 'मयि' इति वाक्यस्य स्मृत्यैव तथा व्याख्यातत्वात् । आदिपदगृहीतेन 'सर्वधर्मान् परित्यज्य' इत्यादिनाऽवैष्णवारम्भपरित्यागेन सर्वारम्भपरित्यागीत्युक्तं सिद्ध्यति । तस्य तथा सयुक्तिकं व्याकरिष्यमाणत्वात् ।

ननु 'सर्वारम्भपरित्यागी' इत्यस्य 'शुभाशुभपरित्यागी' इति प्रपञ्च्यमानत्वात् अवैष्णवारम्भपरित्यागीत्यादिकं किं विशिष्याभि-

---

तत्रोक्तधर्मेभ्यो धर्मान्तरकथनेनेति योज्यम् ॥ अन्यथाप्रतीतीति ॥ आरंभसामान्यनिषेधप्रतीतीत्यर्थः । स्मृत्यैव व्याख्यातत्वादिति । तृतीये नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलमिति स्मृत्या नाहं कर्तेत्यभिमानत्यागः । हरिः कर्तेत्यादिना च भगवति समर्पणरूपः कर्मन्यास इति व्याख्यातत्वादिति भावः ॥ व्याकरिष्यमाणत्वादिति ॥ अष्टादशे (अन्य)

'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः ।
तथोच्यते यथाऽल्पस्वो निःस्व इत्युच्यते जनैः'[1] ॥
न हि मुख्यतया साम्यं कस्यचित्सुखदुःखयोः ।
न च हर्षादिसन्त्यागो यावन्मुक्तिः कुतश्चन ॥

इति च ।

'हृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः ।'

इति शब्दनिर्णये ॥ १७ ॥ १९ ॥

व्यस्तेन प्रियाः समस्तेनातीव प्रियाः । भक्तिस्तु व्यस्तेऽ-

---

धीयत इत्यतस्तत्स्मृत्यैव उक्ताविरुद्धतया व्याचष्टे ॥ भक्तिमिति ॥ उपलक्षणं चैतत् । तत्साधनतया वैष्णवारम्भांश्चेति ज्ञातव्यम् । 'समदुःखसुखः', 'हर्षामर्षभयोद्वेगैर्मुक्तः' इत्येतन्नियमप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे ॥ प्राय इति ॥ तथोच्यते सुखादिषु समो हर्षादिवर्जित उच्यते । एवं चेदल्पवैषम्यादेर्विद्यमानत्वात् कथं तदभावोक्तिरित्यत आह ॥ यथेति ॥ मुख्यार्थ एव किं न स्यादित्यत आह ॥ न हीति ॥ ननु हर्षस्य गुणत्वात् कथं तत्परित्यागोऽपेक्षिततयोच्यत इत्यतो हर्षशब्दस्य हेयार्थतां स्मृत्यैव दर्शयति ॥ हृतिरिति ॥ मनस इति शेषः । ननु 'अद्वेष्टा' इत्यादावद्वेषादिमतां प्रियत्वमात्रमुक्त्वा 'ये तु धर्म्यामृतम्' इत्यत्र श्रद्धादिमतामतिप्रियत्वं किं निमित्तमुच्यत इत्यत आह ॥ व्यस्तेनेति ॥ 'अद्वेष्टा' इत्यादौ यत् पृथक् पृथक् साधनमुक्तं तत्तन्मात्रेण प्रियत्वमुक्तम् । 'ये तु' इत्यत्राद्वेष्टेत्यादिप्रागुक्तसमस्तसाधनेनातीवप्रियत्वम् । व्यस्तात् समस्तस्याधिक्यादिति

---

सर्वधर्मान् परित्यज्येत्युक्तशेषत्वेनेत्यादिनेत्यर्थः ॥ उक्ताविरुद्धतयेति ॥ अवैष्णवेत्याद्युक्ताविरुद्धतया शुभपदस्य ज्ञानभक्तिवैराग्यान्यशुभपरतया व्याचष्ट इत्यर्थः । एतेन वैष्णवेत्यस्य ज्ञानभक्तिवैराग्यान्यानीत्युक्तम् ॥ तत्साधन-

---

1. अ. बुधैः ।

प्युक्तैव । 'यस्मान्नोद्विजते' इत्यत्रापि स चेत्यनेन भक्तिरनुषज्यते[1] । धर्मसाधनं धर्म्यं, तदेवामृतसाधनममृतं धर्म्यामृतम् ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये द्वादशोऽध्यायः ॥ १२ ॥

---

भावः । ननु 'अद्वेष्टा' इत्यादावद्वेषादिसाधनेन प्रियत्वमुच्यते, 'ये तु' इति भक्त्याऽतीव प्रियत्वमुच्यत इति किं न स्यात्? भक्तेः सर्वसाधनोत्तमत्वादित्यत आह ॥ भक्तिरिति ॥ अद्वेषादिकथनेऽपि भक्तेरुक्तत्वात् नायं विभागो युक्त इति भावः । 'यस्मान्नोद्विजते लोकः' इति व्यस्तसाधनकथने भक्तेरनुक्तत्वात् कथं भक्तिस्तु व्यस्तेष्वयुक्तैवेत्युच्यत इत्यत आह ॥ यस्मादिति ॥ १७-१९ ॥

धर्म्यामृतपदस्य दुर्गमार्थत्वादर्थमाह ॥ धर्मेति ॥ २० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥

---

तयेति ॥ ज्ञानभक्तिवैराग्यसाधनतया तुलस्याहरणभगवदाराधनतीर्थयात्राचारांश्च विनेत्यर्थः ॥ व्यस्तसाधनकथन इति ॥ असमस्तसाधनकथन इत्यर्थः ॥

इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वादशोऽध्यायः ॥ १२ ॥

---

1. 'भक्तिस्तु' इत्यारभ्य 'अनुषज्यते' इत्यन्तं 'अ' पाठे न दृश्यते ।

# ॥ अथ त्रयोदशोऽध्यायः ॥

हरिः ॐ। सर्वार्थसङ्क्षेपोऽयम् ।

"हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।
अव्यक्तादिशरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥

---

**एतदध्यायप्रतिपाद्यमर्थं दर्शयति ॥ सर्वेति ॥ यत् प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तं, यच्च द्वितीये भगवत्स्वरूपं निरूपितं, 'न त्वेवाहं' इत्यादौ यज्जीवस्वरूपं प्रदर्शितं, 'भूमिरापोऽनल' इत्यादौ यत् क्षेत्रमभिहितं तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रदर्शयतीत्यर्थः। सर्वेषामध्यायानामर्थान् सङ्क्षिपति सङ्क्षिप्य दर्शयतीति सर्वार्थसङ्क्षेपः ।**

**तत्र 'तत् क्षेत्रं यच्च' इति प्रतिज्ञातम् । भगवज्ज्ञानस्यैव मोक्षहेतुत्वात् क्षेत्रं भगवत्स्वरूपं चोभयं किमर्थमुच्यत इत्याशङ्का तावत्परिह्रियते 'इदं' इति । तत्र 'सङ्घातश्चेतना' इति क्षेत्रविकारत्वेनोक्त-**

---

हरिः ॐ ॥ पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषानित्यादिभाष्योक्तदिशा तात्पर्यवाक्यं विवृणोति ॥ यत्प्रथमेत्यादिना ॥ बहूनि मे व्यतीतानि जन्मानीत्यादेरपि कथनादुक्तं प्राचुर्येणेति ॥ द्वितीय इति ॥ षट्क इत्यनुषज्यते ॥ न त्वेवाहमित्यादौ यज्जीवस्वरूपमिति ॥ द्वितीयाध्यायादाविति योज्यम् । तत्र जीवस्वरूपोक्तेरेव प्राधान्यं भगवत्स्वरूपं तु तादर्थ्येनेति भावः ॥ क्षेत्रमिति ॥ क्षीयते हरिरत्रेति भगवदावासस्थानमुक्तमित्यर्थः । संक्षेपशब्दस्य भावार्थत्वेऽध्याहृताध्यायपदेन सामानाधिकरण्यायोगात्कर्तरि निष्पन्नः सन् प्रदर्शनलक्षक इति भावेनाह ॥ संक्षिपति संक्षिप्य प्रदर्शयतीति सर्वार्थसंक्षेप इति ॥ संक्षिप्य प्रदर्शक इत्यर्थः । करणे कर्तृत्वोपचार इति भावः ॥ परिह्रियत इति ॥ क्षेत्रज्ञत्वप्रकारकभगवज्ज्ञानोपयोगित्वात् क्षेत्रत्वोक्तेरिति भावेनेति योज्यम् । संघातश्चेतनेतीत्यनन्तरं वक्ष्यमाणेति योज्यम् ॥ क्षेत्रविकारेषु एक-

इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिश्च चेतसः ।
तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिताः ॥
विकारेच्छादिनिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः ।
मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ॥
चिन्मात्रद्वेषदुःखे च देहो मिथ्यादृगात्मकः ।
निषिद्धेच्छा यत्र स्युर्नित्या सा मुक्तिरासुरी ॥

---

शरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इत्याशङ्कापरिहाराय श्रुत्यैतद्व्याचष्टे ॥ हिंसेति ॥ जीवस्य स्वतो नित्यत्वात् देहादितया परिणतैतदुपघातादेव जीवो हिंसित इत्युच्यते। अव्यक्तादिकं हिंसाहेतुर्जीवस्य भवति । शॄ हिंसायामिति धातोर्हिंसाहेतुत्वात् शः । परेणेर्यत्वादीरमिति शरीरमित्यर्थः। क्षीयतेऽत्रेत्यस्मिन् अव्यक्तादिशरीरे भगवता स्थीयत इत्यर्थः । क्षि निवासगत्योरिति धातोः । अव्यक्तादीत्यनेन महाभूतानीत्यस्यार्थ उक्तो भवति। तद्विकाराः क्षेत्रविकाराः। अनेन 'इच्छाद्वेष' इत्युक्तार्थं भवति । विकारित्वं च न चिद्रूपेच्छादीनामिति भावेनाह। चिद्रूपेति॥ अनेन स्वयमचिद्रूपा इति लभ्यते। वर्तन्त इति शेषः। किमेतेषां सदा मिश्रतयाऽवस्थानमित्यतः संसार एव न सर्वदेति भावेनाह॥ विकारेति॥ मुक्तौ द्वेषदुःखाभावात् कथं चिन्मात्रेच्छादिसंयुतो मुक्तः स्यादित्यत आह॥ मुक्तिश्चेति॥ आसुरी दैवी चेति शेषः। तर्हि दैवमुक्तौ द्वेषाद्ययोगादासुरमुक्तौ च सुखाद्ययोगाद्धिकं सङ्कटमेवेत्यतः प्रत्येकमिच्छाद्यशेषासम्भवेऽपि विभागेन तत्सम्भवादविरोध इति भावेनाऽह ॥ चिन्मात्रेति॥ यत्र स्युरित्युत्तरत्रापि सम्बद्ध्यते। इच्छादिष्वपठिताऽपि

---

देशत्वेन संघातपदेनोक्तेत्यर्थः ॥ इति धातोरिति ॥ विच्प्रत्यये सार्वधातुकेति गुणे च शरिति रूपमिति भावः ॥ ईर्यत्वादीरमिति ॥ ईर प्रेरण इति धातोः कर्मणि घञि ईरमिति रूपमिति भावः ॥ इति धातोरिति ॥ अधिकरणे

चिन्मात्रा वैष्णवी भक्तिर्देहः सम्यग् दृगात्मकः ।
सुखमिच्छानुकूला च धृतिर्दैवीति सा मता ॥"

इति नारायणश्रुतिः ।

"क्षेत्रज्ञो भगवान् विष्णुर्न ह्यन्यः क्षेत्रमञ्जसा ।
वेत्त्यसौ भगवान् ज्ञेयो व्यक्ताव्यक्तविलक्षणः ॥
स तु जीवेषु सर्वेषु बहिश्चैव व्यवस्थितः ।
विलक्षणश्च जीवेभ्यः सर्वेभ्योऽपि सदैव च ॥
सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान् ॥

---

विष्णुभक्तिर्द्वेषस्य पठितत्वेन तत्प्रतियोगितया गृह्यते ।

'एतद्यो वेत्ति' इत्येतज्जीवविषयतया प्रतीतिनिरासाय वचनान्तरेण व्याचष्टे ॥ क्षेत्रज्ञ इति ॥ यः क्षेत्रं जानाति स सर्वोऽपि क्षेत्रज्ञः, अतो विष्णुरिति किं विशिष्योच्यत इत्यत आह ॥ न हीति॥ किमयं स्वयं क्षेत्रान्तर्भूतः सन् तज्जानातीत्यपेक्षायामाह ॥ असाविति ॥ अनेन 'न सत्तत्' इति व्याख्यातं भवति । सर्वासन्निहितत्वात् कथं सर्वज्ञानं हरेरित्यत आह ॥ स इति ॥ एतेन 'बहिरन्तश्च' इति व्याख्यातं भवति । विष्णोः सर्वजीवाभिन्नत्वात् कथं तेषु स्थितिरित्यत आह ॥ विलक्षणश्चेति ॥ कथं वैलक्षण्यमित्यत आह ॥ सर्वत इति ॥ केशादिषु पाण्यादिशक्तिमत्त्वं युक्तिविरुद्धमित्यतः प्रतीतत्वान्न युक्तिविरुद्धमिति भावेनाह ॥ कृष्णेति ॥ अनेन 'सर्वतः' इत्युक्तार्थं भवति ।

---

औणादिकत्रप्रत्यये गुणे च क्षेत्रमिति सिद्धमिति भावः ॥ उत्तरत्रापि संबद्ध्यत इति ॥ दैवी तु सा मतेत्यतः पूर्वमित्यर्थः ॥ तत्प्रतियोगितयेति ॥ तद्विरोधितयेत्यर्थः ॥ न सत्तदिति ॥ न सत्तन्नासदुच्यत इति गीतावाक्यं

*

सर्वेन्द्रियाणां विषयान् वेत्ति सोऽप्राकृतेन्द्रियः ।
यतोऽतोऽनिन्द्रियः प्रोक्तो यन्न भिन्नेन्द्रियोऽथवा ॥
गुणैः सत्त्वादिभिर्हीनः सर्वकल्याणमूर्तिमान् ।
अन्यथाभावराहित्यादचरश्चर एव च ॥
चरणात्सर्वदेशेषु व्याप्तोऽणुर्मध्यमस्तथा ।
सर्वगत्वात् समीपे च दूरे चैवान्तरे च सः ॥

---

का नाम भगवत्पाण्यादिशक्तिरित्यत आह ॥ सर्वेति ॥ वेत्तीत्येतत् कर्मणोऽप्युपलक्षकम् । अनेन 'सर्वेन्द्रियगुण' इति व्याख्यातं भवति । सर्वेन्द्रियगुणा आभास्यन्तेऽ [illegible] यन्तेऽनेनेति । भगवतः पाण्यादिमत्त्वे श्रुत्यादावनिन्द्रियत्वोक्तिः कथमित्यत आह ॥ स इति ॥ अनेन 'सर्वेन्द्रियविवर्जितं' इत्युक्तार्थं भवति । ज्ञानादिगुणसद्भावे कथं तस्य निर्गुणत्वोक्तिरित्यत आह ॥ गुणैरिति ॥ कुत एवं निर्गुणत्वश्रुतेरर्थान्तरं कल्प्यते ? सर्वथा गुणराहित्यमेव किं न स्यादित्यतः तस्य सर्वकल्याण-गुणमूर्तिमत्त्वेन प्रमाणसिद्धत्वादित्याह ॥ सर्वेति ॥ अनेन "निर्गुणं" इत्युक्तार्थं भवति । हरेः पाणिपादादिमत्त्वेऽचरत्वोक्तिः कथमित्यत आह ॥ अन्यथेति ॥ क्वचिच्चरत्वोक्तेः कथं विकारित्वाभाव इत्यत आह ॥ चर इति ॥ अनेन "अचरं चरमेव च" इति व्याख्यातं भवति । कथं सर्वगतस्य चरणमित्यतो न तस्य सर्वगतत्वमेव किन्त्वणुत्वं मध्यमत्वं चास्तीत्याह ॥ व्याप्त इति ॥ अनेन "सर्वमा-वृत्य तिष्ठति", 'हृदि सर्वस्य विष्ठितम्" इत्याद्युक्ततात्पर्यं भवति । तद्दूरे तद्वन्तिक इत्यादौ विरुद्धधर्मोक्त्येश्वरस्य निःस्वभावत्वोक्तेः कथमुक्तं युक्तं स्यादित्यतस्तद्घटयति ॥ सर्वगत्वादिति ॥ अनेन

---

व्याख्यातमित्यर्थः ॥ कर्मणोऽप्युपलक्षणमिति ॥ सर्वकर्मेन्द्रियकर्माणि करोति चेत्यपि ज्ञेयमित्यर्थः ॥ अनेनेतीति ॥ इति व्याख्यातमितीति पूर्वेणान्वयः ॥ इत्याद्युक्ततात्पर्यं भवतीति ॥ महत्त्वाणुत्वपरिमाणरूपेण हृदि विष्ठितमित्युक्तं

अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः ।
सन्ति सर्वे गुणास्तत्र न च तत्र विरोधिनः ॥"

इति च ।

न च जीवस्य क्षेत्रज्ञनाम ।

"क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताश्चापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥"

इति भागवते ।

अत एतद्यो वेत्तीत्युक्ते जीवस्यापि किञ्चिज्ज्ञानात्तत्प्राप्तेस्तन्निरा-

---

"दूरस्थं" इति व्याख्यातं भवति । व्याप्तत्वाणुत्वादीनां वस्त्वन्तरे सहानवस्थानात् कथं हरौ सह स्थितिरित्यत आह ॥ अनन्तेति ॥ अनन्ताव्ययशक्तित्वेऽपि विरोधिनः कथं तेऽत्र सन्तीत्यत आह ॥ न चेति ॥ क्षेत्रज्ञनाम्नो जीवे प्रसिद्ध्यभावाच्च नात्रासावुच्यत इत्याह ॥ न चेति ॥ क्वचित् सद्भावेऽपि तदमुख्यमिति भावः । न च विष्णावपि क्षेत्रज्ञनाम्नो न प्रसिद्धिरिति वाच्यम् । उक्तवचन एव प्रसिद्धत्वात् । वचनान्तरेऽपि तत्प्रसिद्धिं दर्शयति ॥ क्षेत्रज्ञ इति ॥ मनसो विभूती-र्मनसो विकारान् । मायारचिताः निमित्तभूतस्वेच्छारचिताः ।

इतश्च "एतद्यो वेत्ति" इत्येतन्न जीवपरमित्याह ॥ अत इति ॥ यतोऽत्र न जीवो विवक्षितोऽत एव एतद्यो वेत्तीति भगवदभिप्रायेण । सामान्यतः क्षेत्रज्ञशब्दस्य व्युत्पादितत्वात् जीवस्यापि किञ्चित्क्षेत्रज्ञान-सद्भावात् तस्य क्षेत्रज्ञत्वप्राप्तेस्तन्निराकरणाय क्षेत्रज्ञं मामित्युक्त-मित्यर्थः । जीवस्य क्षेत्रज्ञत्वनिराकरणाय क्षेत्रज्ञं मामित्युक्तमिति कुत इति चेत् ? किम् 'एतद्यो वेत्ति' इत्यस्येश्वरपरत्वमभ्युपगम्येदमुच्यते

---

भवतीत्यर्थः ॥ उक्तवचन एवेति ॥ क्षेत्रज्ञो भगवान्विष्णुरिति प्रागुक्तवचन एव प्रसिद्धत्वादित्यर्थः । मनोविकारान् ज्ञानेच्छादीनित्यर्थः । व्यर्थपदस्यार्थ-

करणार्थं क्षेत्रज्ञं चापि मां विद्धीत्याह । अन्यथा एतद्यो वेत्तीत्युक्तेनैव सिद्धत्वात् क्षेत्रज्ञं चापीति व्यर्थम् । भेदपक्षे तु नामनिरुक्त्यर्थमेतद्यो वेत्तीति । सर्वाभेदमपि केचिद्वदन्तीति क्षेत्रं च ज्ञश्चेति

---

उत जीवविषयत्वम्? पक्षद्वयं दूषयति ॥ अन्यथेति ॥ 'एतद्यो वेत्ति' इत्यस्येश्वरपरत्वमङ्गीकृत्य 'क्षेत्रज्ञं मां' इत्यस्य जीवव्यावर्तकत्वानङ्गीकारे परमेश्वरस्य 'एतद्यो वेत्ति' इत्यनेनैव क्षेत्रज्ञत्वसिद्धेः क्षेत्रज्ञं मामिति पुनस्तद्वचनस्य वैयर्थ्यं स्यात्। एतद्यो वेत्तीत्यस्य जीवपरत्वमङ्गीकृत्य क्षेत्रज्ञं मामित्यस्य जीवव्यावर्तकत्वानङ्गीकारे वक्तव्यस्य जीवक्षेत्रज्ञत्वस्यैतद्यो वेत्तीत्युक्तेनैव पूर्णत्वात् क्षेत्रज्ञं मामिति निरर्थकं विरुद्धार्थं च स्यादिति भावः ।

एतद्यो वेत्तीत्यस्य जीवपरत्वेऽपि नोत्तरवाक्यवैयर्थ्यम् । जीवस्य क्षेत्रज्ञत्वमुक्त्वा ईश्वरस्याप्युच्यत इति क्षेत्रज्ञत्वेनोक्तजीवस्य क्षेत्रस्य चेश्वरैक्यमुच्यत इति सार्थक्योपपत्तेः । प्रत्युतैवमनभ्युपगम्येश्वरस्यैव क्षेत्रज्ञत्वाङ्गीकृतावेतद्यो वेत्तीति व्यर्थं स्यात्। क्षेत्रज्ञं चापीत्यनेनैवेश्वरस्य क्षेत्रज्ञत्वसिद्धेरित्यत आह ॥ भेदेति ॥ जीवस्य क्षेत्रज्ञत्वमुक्त्वा तस्येश्वराभेद उच्यत इत्यादियोजनामनङ्गीकृत्येश्वरस्य क्षेत्रज्ञत्वाङ्गीकारेऽप्येतद्यो वेत्तीति सार्थकमेव । क्षेत्रज्ञनामनिरुक्त्यर्थत्वादित्यर्थः । क्षेत्रं जानातीति क्षेत्रज्ञ इति क्षेत्रज्ञनामनिरुक्तेः

---

द्वयमाह ॥ निरर्थकं विरुद्धार्थं च स्यादिति ॥ जीवस्य क्षेत्रज्ञत्वपक्षे भगवतः क्षेत्रज्ञत्वोक्तेर्विरोधादिति भावः । शंकते ॥ एतदित्यादिना ॥ उच्यत इतीत्यनन्तरं वाशब्दो योज्यः । क्वचित्तथैव पाठः ॥ क्षेत्रज्ञं चापि मामित्यत्र क्षेत्रं चासौ तज्ज्ञश्चेति व्युत्पत्तिमुपेत्य ज्ञशब्दार्थोक्तिर्जीवस्य क्षेत्रज्ञस्येति । यद्वा क्षेत्रज्ञजीवं सर्वक्षेत्रं च मामिति सर्वक्षेत्रपदं द्वितीयांततया विपरिणाम्यानुवदति ॥ क्षेत्रस्य चेति ॥ शङ्कामनुवदति ॥ जीवस्येत्यादिना ॥ इत्यादियोजनामिति ॥ प्रागुक्तव्युत्पत्त्या क्षेत्राभेदश्चोच्यत इति

व्युत्पत्तिं निधारयति । क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धीत्यर्थः । तत्पक्षे तु यो वेत्तीत्युक्त ईश्वरस्यापि क्षेत्रज्ञत्वं सिद्धमेव । सर्वाभेद-

---

प्रसिद्धत्वात् क्षेत्रज्ञं चापि मामित्येतावतैवालं किं निरुक्त्येत्यत आह ॥ सर्वेति ॥ 'क्षेत्रज्ञं चापि मां विद्धि' इत्येवोक्ते क्षेत्रं च ज्ञश्चेति क्षेत्रज्ञ इति व्युत्पत्त्या जडजीवात्मकत्वमीश्वरस्यैवोच्यत इति प्रतीतिः स्यात् । तन्निराकरणाय प्रसिद्धाऽपि व्युत्पत्तिरुच्यते । न च प्रसिद्ध-व्युत्पत्तिं परित्यज्यैवं व्युत्पत्त्या शङ्काप्राप्तिरेव नास्तीति वाच्यम् । जडजीवात्मकस्य सर्वस्यापीश्वरेणाभेदमङ्गीकुर्वतां तथा प्रतीतिसम्भ-वादिति भावः ।

ईश्वरस्य क्षेत्रज्ञनामनिरुक्तिः, जीवस्य तदभाव इत्येतत्सर्वस्य एतद्यो वेत्तीश्वरस्तं क्षेत्रज्ञं प्राहुरित्यादिवाक्य एव ईश्वरवाचिपद-प्रक्षेपेण वक्तुं शक्यत्वात् तदर्थं पृथग् वाक्यकल्पने गौरवमित्यत आह ॥ क्षेत्रज्ञमिति ॥ नोत्तरवाक्ये जीवव्यावृत्त्यर्थमेव स्वस्य क्षेत्रज्ञत्वमात्र-मुच्यते । येन गौरवं स्यात् । किन्तु जीवव्यावृत्त्यर्थमीश्वरस्यास्फुट-मुक्तं क्षेत्रज्ञत्वं स्फुटमनूद्याव्यक्तादिशरीरस्य कथं क्षेत्रशब्दवाच्यत्व-मित्यतः क्षीयतेऽत्र ईश्वरेणेति क्षेत्रमित्यर्थसूचनाय स्वस्य क्षेत्रे स्थिति-श्चोच्यत इति भावः ।

यदुक्तमेतद्यो वेत्तीति जीवस्य क्षेत्रज्ञत्वमुक्त्वा क्षेत्रज्ञं चापीति ईश्वरस्यापि तदुच्यतेऽतो न वैयर्थ्यमिति तन्निराचष्टे ॥ तत्पक्ष इति ॥ एतद्यो वेत्तीत्यस्य जीवविषयत्वपक्षे क्षेत्रं जानातीति क्षेत्रज्ञ इति

---

योजनामित्यादिपदार्थः । शङ्कते ॥ क्षेत्रं जानातीति ॥ इत्येतत्सर्वस्येति ॥ इत्यभिमतार्थस्य सर्वस्येत्यर्थः ॥ आदिवाक्य एव प्रश्नवाक्य एवेत्यर्थः ॥ इतीश्वरवाचिपदप्रक्षेपेणेत्यन्वयः ॥ पृथग्वाक्येति ॥ एतद्यो वेत्तीति क्षेत्रज्ञं चापि मामिति पृथग्वाक्येत्यर्थः ॥ अव्यक्तादिशरीरस्येति ॥ इदं शरीरं कौंतेयेत्यत्रोक्तस्याव्यक्तादिरूपशरीरस्येत्यर्थः । योगव्युत्पत्त्या शरीरशब्दनिर्दिष्टा-व्यक्तादेरिति यावत् ॥ क्षीयत इति ॥ स्थीयत इत्यर्थः । क्षि निवासगत्यो-

विवक्षायां च सर्वं क्षेत्रमिति वक्तव्यम् । क्षेत्रेष्विति व्यर्थम् । न च तत्पक्षे मामित्यस्य कश्चिद्विशेषः । किन्त्वेक एव क्षेत्र इति वक्तव्यम् ॥ ३ ॥

यतश्च यत् । यतः परमेश्वरानुमतेरिदं याति प्रवर्तते स चानुमन्ता यः । अनुसारिणी मतिरनुमतिः प्रेरणरूपा ।

"प्रेरणाऽनुमतिः प्रोक्ता क्वचित्संवाद उच्यते ।
प्रेरकत्वात्तु भगवाननुमन्ता प्रकीर्तितः ॥"

---

व्युत्पत्तेर्जीव इव ईश्वरेऽपि साम्येन एतद्यो वेत्तीत्युक्त्यैवेश्वरस्यापि क्षेत्रज्ञत्वं सिद्ध्यत्येव । अतः क्षेत्रज्ञं चापीति वाक्यं व्यर्थमेवेति भावः । क्षेत्रज्ञतयोक्तजीवस्य क्षेत्रस्य चेश्वराभेदकथनाय क्षेत्रज्ञं चापि मां विद्धीति सार्थकमित्युक्तं दूषयति ॥ सर्वेति ॥ यदि क्षेत्रज्ञं चापि मामित्यत्र क्षेत्रक्षेत्रज्ञरूपस्य सर्वस्याभेदो विवक्षितः स्यात्तर्हि सर्वक्षेत्रं क्षेत्रज्ञं चापि मां विद्धीति वक्तव्यम् । सर्वक्षेत्रेष्विति सप्तमीप्रयोगोऽनुपपन्नः स्यादिति भावः । तर्हि क्षेत्रज्ञस्यैवेश्वराभेदोऽत्रोच्यताम् । तथात्वे बाधकाभावादित्यत आह ॥ न चेति ॥ यदि क्षेत्रज्ञतयोक्तजीवस्येश्वरस्य चैक्यमत्र विवक्षितं स्यात्तर्हि क्षेत्रज्ञोऽहं चैक एवेति वक्तव्यम् । न तु क्षेत्रज्ञमनूद्येश्वरत्वविधानं युज्यते । जीवमनूद्य मां विद्धीति विधातुमस्येश्वरस्यापि जीववत् कल्पितत्वेन विशेषाभावादिति भावः ॥ ३ ॥

'तत्क्षेत्रं यत्' इत्युक्तत्वात् 'यतश्च यत्' इति पुनरुक्तिरित्यत आह ॥ यतश्चेति ॥ तर्हि 'सा च या' इति वक्तव्यमित्यतस्तत्प्रतिज्ञान्तरमिति भावेनाह ॥ स चेति ॥ केयमनुमतिरित्यत आह ॥ अनुसारिणीति ॥ कार्योत्पादस्येति शेषः । अनेनानुमन्तृशब्दार्थोऽप्युक्तो भवति । अत्र प्रमाणमाह ॥ प्रेरणेति ॥ 'यतश्च यत्', 'स च

---

रिति धातोः ॥ अनुपपन्नः स्यादिति ॥ विपरिणामस्त्वगतिकागतिरिति

इति च । उपद्रष्टाऽनुमन्ता चेत्यनेनैवानुमतिरनुमन्ता चोक्तः । ज्ञेयं यत्तदित्यादिना यत्प्रभाव इत्यपि ॥ ४ ॥

चेतना चित्तव्याप्तिः ।

"सङ्घातो देह उद्दिष्टश्चित्तव्याप्तिस्तु चेतना ।"

इति च ॥ ५–७ ॥

तत्त्वज्ञानविषयस्य विष्णोरपरोक्षदर्शनं तत्त्वज्ञानार्थदर्शनम् । ज्ञायतेऽनेनेति ज्ञानम् । ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या "एतज्ज्ञानमिति प्रोक्तं" इति ज्ञानसाधनं ज्ञानं चोक्तम् ॥ १२ ॥

---

यः' इति प्रतिज्ञाद्वयं चेत्तर्हि तदुभयमुत्तरत्रोच्यते । न चोभयोक्तिः श्रूयत इत्यत आह ॥ उपद्रष्टेति ॥ 'उपद्रष्टाऽनुमन्ता' इत्यादिनाऽनुमन्तुरुक्तत्वात् तद्धर्मतयाऽनुमतिरप्युक्तैवेति भावः । 'यत्प्रभावश्च' इति प्रतिज्ञातं कुत्रोच्यत इत्यत आह ॥ ज्ञेयमिति ॥ ननु चैतन्यस्याविकारित्वात् कथं विकारेषु चेतना पठ्यत इत्यत आह ॥ चेतनेति ॥ ननु महाभूतानीत्यादिनोक्तानां सङ्घातस्य क्षेत्रत्वात् कार्यत्वं कथमुच्यत इत्याशङ्कां परिहरन् उक्तार्थे प्रमाणमाह ॥ सङ्घात इति ॥ ७ ॥

ज्ञेयं वक्तुं ज्ञानमुच्यते 'अमानित्वं' इति । तत्र तत्त्वज्ञानार्थदर्शनपदस्यास्फुटार्थत्वात् तदर्थमाह ॥ तत्त्वेति ॥ नन्वमानित्वमित्यादिना ज्ञानसाधनं तत्त्वज्ञानार्थदर्शनमिति ज्ञानं चोक्त्वोपसंहारे कथम् 'एतज्ज्ञानमिति प्रोक्तं' इत्युच्यत इत्यत आह ॥ ज्ञायत इति ॥ प्रोक्तमित्यत्र ज्ञानशब्देनेति शेषः । उक्तमित्युच्यत इति वा ॥ १२ ॥

ननु 'अनादिमत्परं ब्रह्म' इत्यत्रानादीत्येतावता पूर्णत्वात् अनादिमदिति किमर्थमुच्यत इत्यत आह ॥ अनादीति ॥ न चात्र

---

भावः ॥ ज्ञानमुच्यत इति ॥ ज्ञानशब्दोऽत्र भावे करणे च व्युत्पन्नः सन् ज्ञप्तितत्साधनोभयपरः । केन साधनं केन ज्ञप्तिरुच्यत इत्यतस्तद्विवेचयन्नेव मूलमवतारयति ॥ नन्वित्यादिना ॥ न चात्रेति ॥ आदिमन्न भवतीत्यनादि-

अनादीत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्यर्थमनादिमदित्याह ।

"मुख्यतो गुणपूर्णत्वात्परंब्रह्म जनार्दनः ।
मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते ॥" इति च ।
"मूर्तं सदवगम्यत्वादज्ञेयत्वादसत्परम् ।
पुंसामर्थ्यादगम्यत्वात् सर्ववेदप्रसिद्धितः ।
विलक्षणः सदसतोर्भगवान् विष्णुरव्ययः ॥"

इति च ॥ १७ ॥

---

**भाष्यविरोधः। तत्रोक्तस्य मतुपो मुख्यार्थस्यानङ्गीकारे भाष्ये दोषस्योक्तत्वात्। अत्र पुनस्तमङ्गीकृत्यैव [1]प्रयोजनान्तरं मतुपा चिनोतीति।**

---

मदित्यभिप्रेत्यानादीत्यादीना मूलोक्तार्थेऽन्यथानादीत्येव स्यादिति भाष्ये विरोध इत्यर्थः ॥ तत्रेति ॥ आदिमन्न भवतीत्यनादिमदिति विग्रहाङ्गीकारेण कारणोपेतं नेत्यर्थस्वीकारे न विद्यते आदिः कारणं यस्येति बहुव्रीह्याश्रयेणैवास्यार्थस्य सिद्धेर्मतुपो वैयर्थ्यं स्यादित्युक्तेस्तद्विरोध इत्यर्थः ॥ तत्रोक्तस्येति ॥ आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियगुणकर्माणि। न विद्यन्ते आदिमन्ति यस्य तदनादिमदित्युक्तस्य मुख्यार्थत्वस्येत्यर्थः। दोषस्येति ॥ मतुपो वैयर्थ्यदोषस्येत्यर्थः ॥ तमङ्गीकृत्येति ॥ वैयर्थ्यदोषमङ्गीकृत्य आदिकारणं न भवतीत्यनादीति नञ्तत्पुरुषाश्रयेण स्वयं कारणं नेति चोद्यनिवृत्तिरूपं प्रयोजनमन्वाचिनोति। अनास्थयोपादत्त इत्यर्थः। चार्थयोरन्वाचयसमुच्चययोरन्वाचयरूपार्थो न समुच्चयरूपः। अनादीत्युक्तावपि न विद्यते आदिकारणं यस्येति बहुव्रीहिणा स्वस्य कारणं नेत्यर्थो लभ्यते । नञ्तत्पुरुषपक्षे तु छान्दसलिङ्गव्यत्ययो वा विभक्तिलोपो वा आश्रयणीयः । अन्यथाऽऽदिशब्दस्य नित्यपुल्लिङ्गतयाऽनादिरिति स्यात्। अतोऽनास्थयोक्तशङ्कानिवृत्तिरूपं

---

1. प्रयोजनान्तरमन्वाचिनोति इति पाठान्तरम्।

ज्ञानेन मुक्तौ प्राप्यत्वात् ज्ञानगम्यम् । स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थेति स्वज्ञेयत्वाज्ज्ञेयम् । अन्यज्ञेयत्वस्य "ज्ञेयं यत्तत्" इति पूर्वमेव सिद्धत्वात् । कर्तृकर्मविरोधवादिमतं निराकरोत्युत्तरज्ञेयशब्देन ।

"स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः ।
परस्य वेत्ता वित्तिश्च वेद्यश्च स्यात्परैः क्वचित् ॥

---

**परंब्रह्म न सत्तन्नासदुच्यत इत्येतत् प्रमाणवाक्येनैव व्याचष्टे॥ मुच्यत इति ॥ कथं मूर्तामूर्तयोः सदसच्छब्दवाच्यत्वं, कथं च भगवतस्तद्विलक्षणत्वमित्यत आह ॥ मूर्तमिति ॥ परं अमूर्तम् ॥ १७ ॥**

**ज्ञानगम्यमिति ज्ञानविषयत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह॥ ज्ञानेनेति ॥ ज्ञेयपदेनान्यज्ञेयत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह॥ स्वयमेवेति ॥ अत्र स्वज्ञेयत्वमेवोच्यते, न तु परज्ञेयत्वम् । न च भगवतः स्वज्ञेयत्वाभावः । स्वयमिति तस्योक्तत्वादित्यर्थः । अन्यज्ञेयत्वमर्थः किं न स्यादिति आह ॥ अन्येति ॥ ज्ञानं ज्ञेयमिति ज्ञेयशब्देनैकस्यां क्रियायां कर्तृकर्मणोरैक्यविरोधान्नेश्वरस्य ज्ञेयत्वमुक्तमिति वदतां वादिनां मतनिरासाय स्वज्ञेयत्वमेवोच्यते । न त्वन्यज्ञेयत्वम् । तस्य 'ज्ञेयं यत्तत् प्रवक्ष्यामि' इत्युपक्रमवाक्य एवोक्तत्वेन पुनरुक्तिप्रसङ्गादिति भावः । स्वज्ञेयार्थत्वे प्रभावोक्तिरियं कथमित्यत आह ॥ कर्तृकर्मेति ॥ अघटितमप्येकस्यां ज्ञानक्रियायां कर्तृकर्मभावमात्मनि ईश्वरो घटयतीत्येवमभिप्रायेणेदमुच्यते । अतो भवति प्रभावोक्तिरियमिति भावः ।**

**ईश्वरस्य ज्ञेयत्वे प्रमाणान्तरं चाह ॥ स्ववेत्तेति ॥ स्ववेत्ता स्वतन्त्रवेत्ता । तस्य वेदनं च स्वतन्त्रम् । कस्य वेत्तेत्यत आह ॥**

---

प्रयोजनलाभमङ्गीकरोत्यादिमन्नेति विग्रहाश्रयणम् । वस्तुतस्तु भाष्योक्तार्थ एव तात्पर्यमिति भावः ॥ इत्येतदिति ॥ परब्रह्मादिशब्दजातमित्यर्थः ॥ उक्तत्वादिति ॥ दशमे ॥ स्वतन्त्रवेत्तेति ॥ आगमशासनमनित्यमितीडभावः । वेदि-

